पञ्चा० १८ विव०। काणे च। त्रि० । काणत्वञ्च चक्षु शून्यैकगोलकवत्त्वमन्धत्वं चक्षुरिन्द्रियशून्यत्वमिति भेदः। काके, पुं०। वाच०।

एगदुक्ख–एकदुःख–त्रि० एकदुःखोपेते, " एगे दुक्खे जीवाणं " एकमेवान्तिमभवग्रहणसंभवं दुःखं यस्य स एकदुःख इति। स्था० १ ठा०।

एगपएसता--एकप्रदेशता–स्त्री० एकप्रदेशस्वभावे, "एकप्रदेशता चेहाखण्डकबन्धनिवासता एकप्रदेशस्वभाव एकप्रदेशता । सा चेहैकत्वपरिणतिः । अखण्डाकारबन्धस्य सन्निवेशस्तस्य निवासता भाजनत्वं ज्ञातव्यम्। निष्कर्षस्त्वयम् अखण्डतया आकृतीनां सन्निवेशः परिणमनव्यवहारः तस्य भाजनमाधाराधेयत्वमेकप्रदेशतोच्यते । द्रव्य० १२ अध्या०।

एगपएसोगाढ–एकप्रदेशावगाढ–त्रि० एकस्मिन् प्रदेशेऽवगाढमेकप्रदेशावगाढम्। कर्म०। एकप्रदेशव्यवस्थिते, "एगपएसोगाढं परमोही लहइ कम्मगसरीरं " प्रकृष्टो देशः प्रदेशः एकश्चासौ प्रदेशश्च एकप्रदेशः तस्मिन्नवगाढं व्यवस्थितमेकप्रदेशावगाढं परमाणुद्व्यणुकादि द्रव्यमिति। आ० म० प्र०। स्था०।

एगपक्ख– एकपक्ष –पुं० एकः पक्षो यस्य । असहाये, कर्म०। एकत्रपक्षे, वाच०। एकः पक्षोऽस्येति एकपक्षाश्रिते, एकान्तिके च। "इमं दुपक्खं इममेगपक्खं" इदमस्मदभ्युपगतं दर्शनमेकःपक्षोऽस्येति एकपक्षमप्रतिपक्षतयैकान्तिकमविसंवाद्यर्थाभिधायितया निष्प्रतिबाधं पूर्वापराविरुद्धमित्यर्थः । तथेदमेकं पक्षोऽस्येत्येकपक्षम्। इहैव जन्मनि तस्य वेद्यत्वात् तच्चेदमविज्ञोपचितं परिज्ञोपचितमीर्य्यापथं स्वप्नादिकञ्चेत्यक्रियावादिनश्चार्वाकबौद्धादयः। सूत्र० १ श्रु० १२ अ०।

एगपत्तय---एकपत्रक–त्रि० एकं पत्रं यत्र तदेकपत्रकम्। अथवैकं च तत्पत्रं चैकपत्रं तदेवैकपत्रकम्। एकपत्रोपेते, एकपत्रे, न०। "उप्पले णं भंते ! एगपत्तए किं एगजीवे" एकपत्रकं चेह किशलावस्थाया उपरि द्रष्टव्यम्। भ० ११ श० १ उ०।

एगपरिरय---एकपरिरय---त्रि० एकपर्याये, " एगपरिरयति वा एगपज्जायंति वा एगणाममेदं ति वा एगट्ठा त च जहा कस्सति दव्वस्स एगेव णाम भवति णो वितियंति"आ०चू०१अ०।

एगपिंडिय---एकपिण्डित--- त्रि० एकका सन्तः पिण्डिता एकपिण्डिताः। एकवर्गेण पिण्डिते, " एगदुगपिंडियाणपि " एकद्विकपिण्डितानामपि पञ्चाप्येकका सन्त पिण्डिता एकपिण्डिता । अथवा द्विकेन वर्गरूपेण एक एकाकी एकश्चतुर्वर्गः । अथवा एको द्विवर्गोऽपरस्त्रिवर्ग इत्येवरूपेण पिण्डिता एकद्विकपिण्डितास्तेषामेकद्विकपिण्डितानामपीति।"एगदुगपिंडिया वि हु" एकका पिण्डिता एकपिण्डिता द्विपिण्डिता द्विकेन वर्गद्वयेन पिण्डिता अपिशब्दात् त्रिकपिण्डिताश्चतुष्कपिण्डिताश्चेति। व्य० प्र० १ उ०।

एगपुड–एकपुट–त्रि० एकतले, नि० चू० २ उ०।

एगप्प–एकात्मन्–पुं० एकस्मिन्नात्मनि, । एक आत्मा स्वरूपं स्वभावो वा यस्या । एकस्वरूपे, एकस्वभावे, त्रि० स्त्रियां टाप् वाच०। चेतनाचेतनं सर्वमेकात्मविवर्त इत्यात्माद्वैतवादे, तस्य च सूत्रकृताङ्गस्य प्रथमाध्ययनप्रथमोद्देशके द्वितीयोऽर्थाधिकार । तथोद्देशार्थाधिकारमधिकृत्य निर्युक्तिकृत् " पंचमहभूय एकप्पए य"चेतनाचेतनं सर्वमेकात्मविवर्त इत्यात्माद्वैतवाद प्रतिपाद्यत इत्यर्थाधिकारो द्वितीय इति। सूत्र० १ श्रु० १ अ०। (आत्माद्वैतवादस्य निरूपणनिराकरणे एगावादि शब्दे )

एगप्पवाइ ( न् )—एकात्मवादिन्—आत्माद्वैतवादिनि, सूत्र० १ श्रु० १ अ० ।

एगप्पवाय–एकात्मवाद–पुं०आत्माद्वैतवादिनि, सूत्र०१श्रु०१अ०।

एगप्पमुह—एकप्रमुख— पुं० एको मोक्षोऽशेषमलकलङ्करहितत्वात्मगमो वा रागद्वेषरहितत्वात् तत्र प्रगतं मुखं यस्य स तथा। मोक्षे, तदुपाये वा दत्तदृष्टौ, "णारभेकचरणं सव्वए एकप्पमुहे" आचा० १ श्रु० ५ अ० ३ उ०।

एगभत्त० एकभक्त०–न० एकं भक्तं भोजनं यत्र। एकाशनके, " तह एगभत्तं च" एकभक्तं च एकाशनकं चेति। पंचा० १२ विव०। एकस्मिन् भक्तः। नितान्तभक्ते, त्रि० वाच०।

एगभत्तट्ठ–एकभक्तार्थ–पुं० एकयोग्ये भक्ते,"दसुवस्सादियम्मि एगभत्तट्ठो " यावद्दशानां योग्यमुपस्कृतं तावदेकभक्तार्थो ग्राह्यः। एकयोग्यं तत्र भक्तं ग्राह्यमिति भावः । व्य० १ उ०।

एगभविय--एकभविक–पुं० य एकेन भवेन गतेनानन्तरभव एवोत्पत्स्यते तस्मिन् । सूत्रकृताङ्गे द्रव्यपौण्डरीकमधिकृत्य " एगभविए य बद्धाउए य "॥ एकेन भवेन गतेनानन्तरभवे एव पौण्डरीकेषूत्पत्स्यते स एकभाविक इति। सूत्र० २ श्रु० १ अ०। द्रव्यार्द्रकमधिकृत्यापि "एगभवियबद्धाउया "एकेन भवेन यो जीवः स्वर्गादेरागत्यार्द्रककुमारत्वेनोत्पद्यते इति। सूत्र०२श्रु० ६ अ० एगभविओ जो अणतरं उव्वट्टित्ता विविए भवे भिक्खू होहित्ति " नि० चू० १ उ०।

एगभाव–एकभाव– पुं० एको भावः । अनन्यविषये रागे, एकस्वभावे, एकाशये, अभिन्नत्वे, अभेदे, तुल्यभावके, त्रि० वाच० । एकस्वभावे, " तओ पच्छा एगभावे एगभूते सिया " एको भावः सांसारिकसुखविपर्ययात् स्वाभाविकसुखरूपो यस्यासावेकभावोऽत एव च एकभूत एकत्वं प्राप्त इति–भ० १४ श० ४ उ०।

एगभूय—एकभूत—त्रि० एकत्वं प्राप्ते भ० १४ श० १ उ०। एकस्मिन् भूते एकासक्ते च। वाच०। अनन्यतया व्यवस्थिते, "एतेगे दुक्खे जीवाणं एगभूते " एकभूतमनन्यतया व्यवस्थितं प्राणिषु न साख्यानामिव बाह्यमिति। स्था० १ ठा०। एक इव एकभूतः । एकतुल्ये, "एगे दुक्खे जीवाणं" एगभूत इवात्मोपम इत्यर्थः इति। स्था०१० ठा०।

एगमडंब–एकमडम्ब—न० निवेशविशेषे, "कारणमेगमडंबे" कारणमशिवादिलक्षणमधिकृत्य कोऽपि साधुरेकाकी जातः कथमप्येकमडम्बं गत. एकमडम्बं नाम यस्य निवेशस्य सर्वासु दिक्षु च नास्ति कोऽप्यन्यो ग्रामो नगरं वा तस्मिन्नेकमडम्बे गत इति। व्य० ३ उ०।

एगमण–एकमनस्–त्रि० एकाग्रचित्ते, "जाएइ सुहमेगमणो " एकमना एकाग्रचित्त इति। आव० ४ अ० । " जं तं कुयति एगमणा" एकाग्रमनसस्सन्त इत्यर्थः " स्था०।

एगमेग–एकमेक–एकैक-इक्किक एकैक-त्रि० सुबन्तस्यैकस्य वीप्सार्थे द्वित्वम् "एकं बहुव्रीहिवत्" पा इति द्विरुक्त एकशब्दो बहुव्रीहिवत् तेन सुब्लोपपुंवद्भावौ । वाच०। वीप्सात्स्यादेर्वीप्स्ये स्वरे मो वा" ८।३।१। इति सूत्रेण वीप्सार्थात्पदात्परस्य स्यादेः स्थाने स्वरादौ वीप्सार्थे पदे परे मो वा भवति। एकमेकम्। प्रा०। प्रत्येकपदार्थे, वाच०। "ता एएणं दुवे सूरिया तीसाए मुहुत्तेहिं एगमेगं अद्धमंडलं चरंत." इति च० १ पाहु०

एकैकमसंजुत्तं सत्तट्ठं एगमेगस्स" एकैकेन संयुक्तमेकं साधुः एकेन सह सयुक्तो यस्मिन्नानयने तदेकैकमिति। ओघ० । "ए-वमिक्किक्के आलावगा भाणियव्वा" स्था० २ ठा० ।

एगमेक्कपक्ख–एकैकपक्ष–पुं० उभयगणे, "एक्कमेक्कपक्खो-णाम जो उभयगणो भवतीति" । नि० चू० १५ उ० ।

एगरस–एकरस–त्रि० एकः अद्वितीयस्तिक्तादिरसान्यतमो रसो ऽस्येत्येकरसः । तिक्तादिरसान्यतमरसोपेते, उत्त० ? अ० । ए-कोऽनन्यविषयको रसः रागः अभिप्रायः एकोऽभिन्न स्वभावो वा अस्य । एकरागे, एकाभिप्राये, अभिन्नस्वभावे च । एको रसो यत्र । एकरागविषये, वाच० ।

एगराइया–एकरात्रिकी–स्त्री० एका रात्रिः प्रमाणमस्या इत्ये-करात्रिकी । सर्वरात्रिक्यां द्वादश्यां भिक्षुप्रतिमायाम्, । "एगि मेगा एगराइया" पंचा० १० विव० । द्वादशी एकरात्रमानेति । द्वा० १ अ० । अस्याः स्वरूपं यथा । "एगा राइंदिय भिक्खुप-डिम पडिवन्ना" ( एगराइयंति ) एका रात्रिः प्रमाणमस्या इ-त्येकरात्रिकी नाम । अस्यां चाष्टमभक्तिको ग्रामादिबहिरीषत्प्र-नतगात्रोऽनिमिषनयनः शुष्कपुद्गलनिरुद्धदृष्टिर्जिनमुद्रास्थापित-पादः प्रलम्बितभुजश्च तिष्ठतीति विशिष्टसंहननादियुक्ता एव चैना प्रतिपद्यन्ते । आह च "पडिवज्जइ एयाओ संघयण-धिइजुओ महासत्तो । पडिमाओ भावियप्पा सम्मं गुरुणा अणु-न्नाओ" इत्यादि । औप० । ग० । सम० । तथा चावश्यकसूत्रम् ।

एमेव एगराइअं, अट्ठमभत्तेण ठाणबाहिरिओ ।
ईसीपब्भारगए, अणिमिसनयणेगदिट्ठीए ।

सा हुह दो वि पाए, वग्घारियपाणिठायए ठाणं ।
वग्घारिलंबिअभुओ, सेसदसामु जह भणिया ॥ आव० ४ अ० ।

एगराइयं भिक्खुपडिमं पडिवण्णस्स अणगारस्स निच्चं वोसट्ठकाए जाव अहियासेति । कप्पति से अट्ठमेण भत्तेणं अपाणएणं बहिया गामस्स वा जाव रायहाणीए वा ईसी-पब्भारगतेणं काएणं एगपोग्गलट्ठिताए दिट्ठीए अणिमिसनयणे अहापणिहितेहिं गत्तेहिं सव्विदिएहिं गुत्तेहिं दो वि पाए सा-हट्टु वग्घारियपाणिस्स ठाणं ठाइत्तए नवरं नक्कुडुयस्स वा ग-रु साइयस्स वा रूंमातियस्स वा ठाणं ठाइत्तए । तत्थ से दि-व्वमाणुस्स तिरिक्खजोणिआ जाव अहाविधि मेव ठाणं ठाइत्त-ए एगराइयं णं भिक्खुपडिमं सम्मं अणुपालेमाणस्स अणगार-स्स इमे त उठाणा अहिताए असुभाए अखमाए अणिस्सेसा-ए अणाणुगामियत्ताए भवंति । तंजहा उम्मायं वा लभेज्जा दीह-कालियं वा रोगातंकं पाउणेज्जा केवलिपण्णत्ताओ वा धम्माओ भंसेज्जा एगराइयं णं भिक्खुपडिमं सम्मं अणुपालेमाणस्स अ-णगारस्स इमे तओ ठाणा हिताए जाव अणुगामियत्ताए भवंति तंजहा ओहिणाणे वा समुप्पज्जेज्जा मणपज्जवणाणे वा सेस-मुप्पज्जेज्जा केवलणाणे वा से समुप्पण्णपुव्वे समुप्पज्जेज्जा । एवं खलु एसा एगराइंदिया भिक्खुपडिमा अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं सम्मं काएणं फासिया पालिता सोहिता तीरिता किट्टिता आराहिता आणाए अणुपालिया वि भवंति । आ० चू० ४ अ० ।

एगराय–एकरात्र– न० एका चासौ रात्रिश्चेत्येकरात्रम् । एकस्या रात्रौ, "एगराइं वा दुराइं वा वसमाणे नाइक्कमइ" ॥ स्था० ५ ठा० "गामे गामे य एगरायं" ग्रामे ग्रामे चैकरात्रिं यावदिति । प्रश्न० ५ द्वा० । एका रात्रिर्यत्र तदेकरात्रम् । एकरा-त्रोपेते, त्रि० । "किमेगरायं करिस्सइ" ॥ जिनकल्पापेक्षया एक-रात्रिर्यत्र तदेकरात्रमुपाश्रयं वसेत । जिनकल्पो हि एकरात्रमु-पाश्रय शुभमशुभं वा सेवेतेति । उत्त० २ अ० ॥

एगरायवासि ( न् )–एकरात्रवासिन्– पुं० अहोरात्रमेव वस्तु शीले, एकरात्रं ग्रामादौ वस्तुशीले च । "णाए एगरायवासी" ॥ ज्ञातः प्रतिमाप्रतिपन्नोऽयमित्येवं जनेनावसितः सन् एकरात्र-वासी एकत्र ग्रामादावहोरात्रमेव वस्तु शीलः । तथा एकं वा एकरात्रं द्विकं वा रात्रिद्वयं ग्रामादौ वस्तुं शीलमिति गम्यमिति । पञ्चा० १८ द्वा० ।

एगरूव०–एकरूप–त्रि० एकं समानं रूपमस्य । तुल्यरूपे,वाच० एकविधाकारे , "पभू एगवण्णं एगरूवं विउव्वित्तए" एकरूपं एकविधाकारं स्वशरीरादीति भ० ६ श० ९ उ० । कर्म० । एकस्मिन् रूपे, वाच० ।

एगलभि ( न् ) एकलम्भिन् त्रि० एकलाभवति, तथाचाह "गज्जूणा य अवस्सा,एगालंभे पहाणाओ । तएग न विवत्ती, अविसेसे देइ जे गुरुणा तु । अहवा वि एगदव्वं, लब्भंति जे ते देइ उ गुरुणं " व्य० प्र० ३ उ० ( व्याख्या आयरिय शब्दे )

एगलंभिय–एकला( म्भि ) भिक–त्रि० एकस्य लाभेन चरति, "एगलंभिए" एकलाभिकान् अथवा य एकं प्रधानं शिष्यमा-त्मना लभते गृह्णाति शेषास्त्वाचार्यस्य समर्पयति स एकलाभे-न चरतीत्येकलाभिकः । व्य० प्र० ३ उ० ।

एगल्ल–एक–त्रि० " ल्लो नवैकाद्वा ८ । २ । ६५ । इति सूत्रेण वा ल्ल । सेवादित्वात् कस्य द्वित्वे एक्कल्लो । पक्षे एको एओ । प्रा० । एकाकिनि, स्था० ७ ठा० ।

एगल्लविहार–एकविहार–पुं० एकाकिनो विचरणे, स्था० ७ ठा० । एकाकिविहारनिषेधस्तत्र दोषश्च । तत्र एकाकिविहारे दोषा यथा ।

एगागियस्स दोसा, इत्थीसाणे तहेव पडणीए ।
भिक्खविसोहि महव्वय, तम्हा सबितिज्जए गमणं ॥ ३१ ॥
गीयत्थो य विहारो, बीओ गीयत्थमीसओ भणिओ ।
एत्तो तइयविहारो, णाणुण्णाओ जिणवरेहिं ॥ ३२ ॥

( एगागियस्साति ) एकाकिनोऽसहायस्य विहरतः सतो दो-षा दूषणानि भवन्ति तद्यथा ( इत्थीसाणेत्ति ) स्त्री शुनी अय च समाहारद्वन्द्वस्ततश्च स्त्रीविषये श्वविषये च । तत्र स्त्रीविषये "विहं विहवा पउत्थवइ, इयागमउहाति दट्ठुमेगागी । दारपिहुणं य गहणं, इच्छमणिच्छे य दोसाओ"तथा श्वा कौलेयकस्तद्दोष-स्ततोऽनेकस्य परिभव तथा चेति समुच्चयार्थः प्रत्यनीके साधु-प्रद्विष्टविषये स ह्येकाकिनमभिभवत्(भिक्खविसोहिमहव्वयत्ति) इह सप्तमी बहुवचनदर्शनाद्भिक्षाविशुद्धौ विषये दोषा महाव्रतेषु तत्र युगपत् गृहत्रयस्य भिक्षाग्रहणे एकस्योपयोगकरणे अश-क्त्वात्तदशुद्धिस्तत एव च प्राणातिपातविरमणविराधनानिमि-त्तप्रश्ने च निःशङ्कतया तद्भणने मृषावादो विप्रकीर्णद्रव्यदर्शने-जिघृक्षादिभावाददत्तादानम् । स्त्रीमुखनिरीक्षणादौ मैथुनं तत्र स्नेहात्परिग्रह इति । यस्मादेतेऽसहायस्य दोषास्तस्मात् (सबिइ-जइत्ति ) सद्वितीयस्य सप्तमीषष्ठ्योरभेदात्कमन भिक्षार्थमटन यदि च भिक्षाटनमपि ससहायस्यैव युक्तं तदा सुतरां विहार ससहायस्यैव युज्यते । ससहायो हि सर्वानेतान् प्रायः परिहर्तुं प्रभुर्भवतीति गीतार्थसाधुसबन्धित्वात् गीतार्थः । चशब्द समु-च्चये भिन्नक्रमश्च । विहारो विचरणमेक इति गम्यते । द्वितीय-श्चान्यो विहारो गीतार्थमिश्रणं बहुश्रुतसमन्वितानामगीतार्था-

नामपि साधूना य स गीतार्थमिश्रको भणित । उक्तो जिनर्वि-धेयतया ऽत्र आज्ञया चान्यां विहाराभ्यामन्यस्तृतीयो विहा-र. । एकानेकागीतार्थसाधुरूपो नानुज्ञातो नानुमतो विधेयतया जिनवरैर्जिननायकैर्यत " सामण्णगजोगाण, बालगागिहिसन्नि-स्सयुओ होइ । दसणणाणचरित्ताण, पच्छण पावए एक्को " इति गाथाद्वयार्थ ।

विशेषविषयत्वमेवास्य स्पष्टयन्नाह ॥

ता गीयम्मि इमं खलु, तदसुन्नावंतरायविसयं तु ।

सुत्तं अवगंतव्वं, णिउणेहिं तं तजुत्तीए ॥ ३३ ॥

ता इति तस्मादेतान्यागमवचनानि सामान्यसाधोरेकाकित्व-स्य निषेधकानि सन्ति तस्माद्गीते गीतार्थसाधुविषये इदम् । " एगो वि पावाइ विवज्जयतो " इत्येतत्सूत्रमवगन्तव्यमिति योग. । खलुरवधारणार्थ । स च योक्ष्यते । अथ गीतार्थविषय किमिद साधु सामान्यत एव नेत्याह । तस्माद्गीतार्थसाधोरन्ये अपरे ये गुणवन्त साधवस्तेषां यो लाभ प्राप्तिस्तत्र योऽन्तरायो विघ्न स एव विषयो गोचरो यस्य तत्तथा। अतस्तदन्यान्तराय-विषयमेव गीतार्थस्यापि साध्वन्तराप्राप्तावेकाकित्वानुज्ञातपरमि-दमिति भावोऽन्यथा ससहायनैव युक्ता । यतोऽभिधीयते " का-लम्मि सकिलिट्ठे, छक्कायदयावरो वि सविग्गो। जइ जोगीण लभे पण,गव्वयरेण सवसइ " पार्श्वस्थावसन्नकुशीलसंसक्तयथाच्छ-न्दाभिधानाना पञ्चानां साधूनामेकतरेण सह वसतीत्यर्थ । इति शब्द प्राग्वत । सूत्र " नयालभेज्जा " इत्यादि " वनरूपमवगन्तव्यमवमे-य निपुणै सद्बुद्धिभिस्तन्त्रयुक्त्यागमिकोपपत्त्योरुपयेति गाथा-र्थ. । पञ्चा० ११ विव० । (कीदृशस्यैकाकिविहार कथ च नयोग्य-ना भवतीत्युवसपया शब्दे ) ( एकाकिविहारस्य परिचिनादिव्या-ख्या व्यवहारकल्पे सा चोवसपया शब्दे ) एकाकिविहारे कार-णान्योघनिर्युक्तौ। तत्र प्रथममेकाकिविहारिण कतिविधा इत्याह

एगो य पुव्वभणिओ, कारणनिक्कारणे दुविहमेदे ।

एक एकाकी द्विविधभेद पूर्वमोघनिर्युक्तौ भणित । तद्यथा कारणे निष्कारणे च । साम्प्रतमेनामेव विवरीषु प्रथमत. कारणे-क्प्रतिपादनार्थमाह ।

असिवादी कारणिया, निक्कारणिया य चक्कथूभादी ॥

ओहावंता दुविहा, लिगेन विहारेण वाहोंति ।

अशिवादिरिरादिशब्दादवमौदर्या राजद्विष्टादिपरिग्रह. । का-रणैरेकाकिन कारणिका । चक्रस्तूपादौ आदिशब्दात्प्रतिमा-निष्क्रमणादिपरिग्रहस्तेषा वन्दनाय गच्छन्त एकाकिनो निष्कार-णिका विहिनोत्प्रव्रजितुकामा विहारेण पार्श्वस्थविहारेण विहर्तु-कामा भवन्ति ज्ञातव्या । एतेषु कारणिका १ निष्कारणिका २ औपदेशिका ३ अनोपदेशिका ४ विह्निनावधाविन ५ विहारे-णावधाविनश्च । ६ । प्रायेणैते एकाकिनो विहरन्ति गच्छन्ति । या उपदेशिका यद्यपि नियमन ससहायास्तथापि येन गच्छा-न्निर्गतास्तेन एकाकिनो भण्यन्ते इतरेऽपि पञ्च यद्यपि वृन्देन हिण्डन्ते तथापि गच्छान्निर्गता एकाकिन प्रोच्यन्ते । तत उक्त-म् । एतेष्वेते विहारिण एकाकिन । व्य० द्वि० ७ उ० ।

कियन्ति पुन तान्यशिवादीनि येष्वसावेकाकी भवतीत्याह ।

असिवे ओमोदरिए, रायभए खुभिय उत्तिमट्ठे य ।

फिडियगिला अइसेसि, देवया चेव आयरिए । ११ ।

न शिवमशिव देवतादिजनितो ज्वराद्युपद्रव । अवमौदरिक दुर्भिक्ष राजो भय कुपित क्षोभ त्रास इत्यर्थ । उत्तमार्थोऽ-नशन फिडित इति भ्रष्टो मार्गात् ग्लानो मन्द अतिशयोऽति-

शययुक्त देवताचार्यो प्रतीतौ अथ नावदक्षरार्थ । भावार्थस्य भाष्यकार एकैक द्वारमङ्गीकृत्य प्रतिपादक । " यथोद्देश निर्दे-शम् " इति न्यायमाश्रित्य यो विधि यत्नेनसावभिधीयते इत्यशि-वमेकाकीत्यस्य हेतुत्व वर्तते तस्मात्तथा कर्त्तव्य यथा तत्र भव-त्येव। केन पुन प्रकारेण तत्र भवतीति चेदुच्यते ।

संवच्छरबारसएण, होहिइ असिवंति ते तओ णिग्गंति ।

सुत्तत्थं कुव्वंता, अइसइमाईहि नाऊणं ॥ १३ ॥

सवत्सराणां द्वादशक २ छौ च दश च द्वादश तेन भविष्य-त्यशिवमिति ज्ञात्वा ते इति तत्रैव तत इति तस्मात् देशात्(णि-ग्गत्ति ) निर्गच्छन्ति सूत्रपौरुषीमर्थपौरुषी च कुर्वन्तो निष्पाद-यन्तोऽन्यदेशमभविष्यदशिव विश्वस्ता सञ्चरन्ति । कथ पुन-र्ज्ञायते । अतिशय आदिर्येषा ते अतिशयादयो ज्ञानहेतव । अति-शयादिज्ञानहेतवस्तै । अतिशयादिप्रतिपादनायाह ।

अइसेसदेवया वा, निमित्तगहणं सय व सीसो वा ।

परिहाणि जाव पत्तं, निग्गमणे गिलाण पडिबंधो ॥१४॥

अतिशयोऽवध्यादिस्तदभावे कृपकगुणाकृष्टा देवता कथयति । अथवा " आयरियाण सुत्तत्थे सुणिण्णा सयमेव णिमित्त घेत्तव्व अहवा सीसो गहणधारणासमत्थो निव्विकारी जो सो गिण्हा-विज्जइ जया आयरिओ बुड्ढो भवति तया अविकारिस्स सीस-स्स दिज्जति । जाहे सो न होज्जा ताहे अन्नो कोइ पुच्छिज्जइ ताहे बारसहिं निगतव्व । अह बारसहि ण णाय ताहे इक्कारसहि जाव जाहे एक्केण वि णाय होज्जा ताहे तम्मासेहिं खुयवाहे णि-ग्गच्छतु। अह वा ण चेव णाय असिव जाय ताहे णिग्गच्छन्तु । अक्षरव्याख्या । अतिशयनमतिशय प्रत्यक्ष ज्ञानमवधिमन पर्या-यकेवलाख्य तेन ज्ञात्वा देवता वा कथयति । भविष्यत्यशिव-मिति निमित्तमनागतार्थपरिज्ञाहेतुग्रन्थस्तस्य ग्रहणं स्वयमेव करोत्याचार्य. शिष्यो वा योग्यो ग्राह्यत निमित्त । परिहाणिजाव पत्तत्ति ) द्वादशकेन यदा न ज्ञात यदा एकादशकेनेत्येकैकहा-न्या परिहाणिरिति यावत् प्राप्तमिति तावत् स्थितव्य । कथञ्चि-द्यावत् प्राप्तमागतमशिव तत्र किमिति निर्गमन निर्गम कार्य स-र्वैरेवेति कथ तर्हि अतिशयमाश्रित्य एकाकित्वमिति चेत्तदाह । ( गिलाणपडिबधो ) ग्लानो मन्दस्तयैव अशिवकारिण्या देव-तया कृत पूर्ववद्धृतो वा तेन प्रतिबन्धो न निर्गम सर्वेषां तस्य पूर्ववशिवकारिण्या स्वतप प्रतिपादनायाह ।

संजयगिहि तदुभय, भद्दिया तह तदुभयस्स ।

वियपंता चउवज्जए, उवस्सयपतिपरंपरात्तत्तं ॥ १५ ॥

असिवे सदसंवत्थं, लोहं लोण च तह य विगई य ।

एयाई वा घेज्जा, चउवज्जयणयंति जं भणियं ॥ १६ ॥

सयना साधवस्तेषां भद्रिका न गृहिणामिति प्रथमो भङ्ग । गृहिणा भद्रिका न सयतानामिति द्वितीय । तयोभयभद्रिकेति तृतीय । तयोभयभद्रिका नेति चतुर्थ । उभयप्रान्ता अभद्रिका अशोभनेत्यर्थ । सा पुण चउप्पगारो सजयभद्दिगा उ भयवेता सजयपता उभयभद्दिगा कह पुण सजयभद्दिगा होज्जा वा गि-हिभद्दिगा सजयपता सजए चेव पढम । [ गिण्हत्ति ) जहा एते महातवमी य ते चेव पढम पेलेयव्वा । एतेसु निज्जिएसु अवसेसा णिज्जिया चेव भवति एत्थ जा होउ सा होउ णिग्गं-तव्व जाहेण णिग्गया केइ णइवाघाएण को वाघाओ एव्व गि-लाणो होज्जा ताए वा तो हाविया कोइ सजओ गहिओ जो पया वा ण वहति नाहे तत्थ जयणाए अत्थियव्व । को जयणा इमाणि चत्तारि परिहारियव्वाणि विगई दसविहा । विलोह लोण

एमेव ओमम्मि वि भेदो, उ अहंसे गोणिदिट्ठंते ।
रायभयं ति चउद्धा, चरिमंमि ठिओ होइ गणभेओ ॥३१॥

(एमेवत्ति) अनेनैव प्रकारेण अवमद्वारमपि व्याख्येयम् । यथा अशिवद्वारव्याख्यानं यो विधिरशिवद्वारे सोऽत्रापीत्यर्थः । चशब्दो बहुसादृश्यप्रतिपादनार्थम् । अवमे दुर्भिक्षे अपिशब्दः सादृश्यमनवेन तदुच्यते "सवच्छरबारसएण होहि उवमनि तो न भणीत्ति" इत्यादि । भेदन भेद एकैकता तुशब्द एवकारार्थः । कस्मिन् पुनरसौ भवतीत्याह । अवाने अवत्यप्रामावाहारस्येत्यर्थः । यदेको लभते ततो द्वावपि द्वौ वा दृष्ट्वा न किञ्चिद्दिजहाति एकैक एव लभत इत्येवमाहारकेकाकिनी अत्र दृष्टान्तमाह [गोणिदिट्ठंते- त्ति] गोदृष्टान्त यथा सहताना गवां स्वल्पेन तृणोदकेन तृप्ति पृथग्भूतानां न स्यात्तथेहापीति [ओमो आरियाएवत्ति] एमेव कामो वारसहिं सवच्छरेहिं आरूढ जोहे पर ण पुव्वति ताहे गणभेद करेति । णाणत्त गिलाणो ण तहा परिहरिज्जति एत्थ गोणिदिट्ठतो कायव्वो " अत्र गोत्राह्मण निदिति ओमेण वि एगागिओ दिट्ठो । साम्प्रतं राजभयद्वारप्रतिपादनायाह । [रायभयति ] राज्ञो भय राजभय चशब्द एवमेवेत्यस्यानुकर्षणार्थः । " सवच्छरवारसएइत्यादि" कियन्त पुनस्तस्य भेदा इत्याह चतुर्धा सख्याया प्रकारवचने धा चतुःप्रकारमित्यर्थः । कैं पुनस्ते इति मा त्वरिष्ठा अनन्तरमेवोच्यन्ते किं चतुर्ष्वपि भेदो नेत्याह [चरिमइत्यादि] चरिमे पश्चिमे इये भवति जायते गणभेदो गच्छपृथग्भाव एकैकतेत्यर्थः । " रायदुट्ठमवि तहेव वारसहिं सवच्छरेहिं होंति "

भेदचतुष्टयस्वरूपदर्शनायाह ।

णिव्विसउत्तिय पढमो, विइओ मा देह भत्तपाणं तु ।
तइओ उवगरणहरो, जीवचरित्तस्स वा भेओ ॥ ३२ ॥

सुगम नवर जीवित भेदकरश्चतुर्थो भेदश्चारित्रभेदकारी वा चतुर्थभेदो राजा उपकरणहारी जीवितचरित्रहारिणो गणभेद कार्य इति । "त चउव्विह निव्विसउत्तिय पढमो । वीओ मा देहभत्तपाणं से तओ उवगरणहारी जीवचरित्तस्स वा भेओ" आह कथ पुन साधूना त्यक्तापराधाना राजभयं भवति "यस्य हस्तौ च पादौ च जीह्वाग्रं च सुयन्त्रितम् । इन्द्रियाणि च गुप्तानि तस्य राजा करोति किम् " सत्यमेतत्किं तर्हि ॥

अहिमर अणिट्ठ दरिसण, वुग्गाहणया तहा अणायारो ।
अवहरणदिक्खणाए, आणालोए य कुप्पेज्जा ॥ ३३ ॥
अंतेउरप्पवेसो, वाइणिमित्तं च सो पदूसेज्जा ।
खुभिओ मालुज्जेणी, पलियणं जो जओ तुरियं ॥३४॥

अभिमुखमाकार्य मारयति म्रियते चेत्यभिगम । कुतश्चित्कोपाद्राजकुले प्रविश्यापर व्यापादयन्तीति साधूना किमायातमिति चेदुच्यते । अन्यथा प्रवेशमलभमान कश्चित्साधुवेषेण प्रविश्य तत्कृतति ततश्च विकृतत्वात् स राजा साधुभ्य कुप्येत् कुप्येदिति चैतत्क्रिया प्रतिपद योजनीया । अनभ्यस्यादनिष्टान्- श्रमणस्तान्मन्यमानो दर्शन नेच्छति प्रस्यानादौ च दृष्टा इति कुप्येत । व्युद्ग्राहणता विशब्द कुत्सायामुग्रावलयेन केनचित्प्रत्यनीकेन व्युद्ग्राहितो यथैते तवानिष्टं ध्यायन्तीति कुप्येत् लोक प्रत्यनाचारं समुद्देशादौ दृष्ट्वा कुप्येत् । अपहरण कृत्वा तत्प्रतिवद्धं दीक्षित इति कुप्येत् । आज्ञालोपे वा आज्ञा काचिल्लोपिता न कृता ततश्च कुप्येत् । अन्तःपुरं प्रवेश कृत्वा केनचिल्लिङ्गधारिणा विकर्म कृत तत प्रद्वेष यावत वादिना वा केनचित् भिक्षुणा परिभूत इति ततो निमित्तात्स इति राजा प्रद्विष्यात् " त पुण रायदुट्ठं कह होज्जा केणइ लिंगत्थेण अनेउरे अवरद्धं होज्जा अहवा जधा वा वाइणा यादे 'तस्स पत्नियमाणिस्स वुद्धिलस्स दुरप्पणो । मुद्धं पाएण अक्कम्म वादी वायुरिवागतो' एव रायदुट्ठ भविज्जा । णिव्विसए भत्तपाणपडिसेहे उवकरणहारे तत्थ गच्छेण चेव वज्जंति । जथ जीयचरित्तभेओ तत्थ एगागिओ होज्जा" । क्षुभितद्वार व्याचिख्यासुराह [खुभियइत्यादि मालुज्जेणित्ति] क्षुभित एकाकी प्रचलित कोऽस आकस्मिकसंत्रासस्तत्र [ मालुज्जेणित्ति ] माला अहरट्टस्य पतिता उज्जयिनी नगरी तत्र बहवो मालवा आगत्य मानुषादीन् हरन्ति । अन्यदा च कूपे अरहट्टमाला पतिता तत्र केनचिदुक्त माला पतिताऽन्येन सहसा प्रतिपन्न मालवा पतिता ततश्च सक्षोभस्तत्र किं भवतीत्याह [ पलायण जो जओ तुरिय ] पलायन नाशन य कश्चिद्यत्र त्वरयस्थितवान् स तत एव नष्ट इति [ मालुज्जेणित्ति ] वृत्तान्तसूचक वचन क्षुभिते वा एगागी होज्जा जहा उज्जइणीए अरहट्टमाला पडिया लोगो भणिओ पलाइतो माला वा पडियत्ति एरिसे खुभिते एगागी होज्जा जो जओ होज्जाओ सो तओ णासइ" अधुना यदुक्त राजद्वार" वायणिमित्त च पडिसेज्जत्ति " तद्व्याचिख्यासुराह ।

तस्स पत्नियमाणस्स, वुद्धिलस्स दुरप्पणो ।
मुद्धं पाएण अक्कम्म–वादी वायुरिवागतो ॥ ३५ ॥

आह चोदक. शोभन स्थान तद्व्याख्या ननु क्षुभितद्वारेणान्तरितत्वात् कोऽर्थ प्रकार इत्यत्रोच्यते निर्युक्तिग्रन्थव्यत्यासदोष यतोऽत्रैव गाथया अन्तेउरे इत्यादिकया राजभयक्षुभितद्वारं उक्तं तत्तत्स्थानवसरत्वादिहैव युक्ता व्याख्या । तस्येति तस्य राज्ञः नयहेतो कथभूतस्य पण्डितमानिन पण्डितमात्मान मन्यते स एव मान्यो ज्ञानलवदुर्विदग्धत्वात् । वुद्धि लातीति वुद्धिलस्तस्य वुद्धिलस्य दुरात्मन. मिथ्यादृष्टित्वादभव्यत्वाच्चासन्नप्रत्यनीकत्वात्तस्य तया तस्य किमित्याह मूर्धानमुत्तमाङ्ग पादेनाक्रम्य वादी वादलब्धिसपन्न. साधुर्वायुरिवागतोऽभीष्ट स्थान प्राप्त इत्यक्षरार्थः । समुदायार्थस्तु स राजा पण्डितम यतया दर्शनं निन्दति तद्वादी वा कश्चित्तत्र साधुवादिनेन सभा प्रविश्य न्यायेन पराजितस्तथापि न साधुकार ददाति प्रभूतत्वात्तथापि निन्दति पुनश्चासौ साधुवादी विद्याविवादनसभामध्ये शिरसि पाद दत्वा दर्शनीभूतस्ततश्चासौ परपराभवमसहमान प्रकर्षेण द्विष्यादिति श्लोकार्थः ।

उत्तमार्थद्वारप्रतिपादनायाह ।

निज्जवगस्स सगासं, असइ एगाणिओ वि गच्छेज्जा ।
सुत्तत्थ पुच्छगो वा, गच्छे अहवा वि पडियरिओ ॥३६॥

निर्यामयत्याराधयतीति निर्यामक । आराधकस्तस्य सकाश सत्यमसति द्वितीयाभावे एकाक्यपि काल कर्तुं कामो गच्छेदिति सूत्रार्थ । प्रच्छको वा गच्छेदुत्तमार्थे स्थिता एकाक्यपि मा भूद्व्यवच्छेदोऽथवापि प्रतिचरितु प्रतिचरणकरणार्थम् । "उत्तिमट्ठे वा सो साहू उत्तिमट्ठं पडिवज्जिउकामो आयरियसगासे य णत्थि णिज्जाओ ताहे अन्नत्थ वच्चेज्जा तो सहायओ वच्चओ असइ नाइणगो एगागिओ वच्चेज्जा अहवा उत्तिमट्ठपडिवन्नओ साहू सुत्तो तस्स यइ सुत्तत्थ तदुभयाणि य अवच्चाणि दुमस्स य सकियाणि अन्नस्स य णत्थि ताहे तत्थ परिपुच्छणाणिमित्तं वच्चेज्जा अहवा उत्तिमट्ठपडियरणट्ठं गम्मइ ।

किंतु निश्चलं निष्प्रकम्प उपविष्टो ध्यायी चास्ते ततस्तमेवंभूत निश्चलनिष्पन्नध्यायिनं दृष्ट्वा किं कर्त्तव्यमित्याह ( चिट्ठेत्ति ) स्थातव्यं तेन गुरुव्याघातेन महाहानिसम्भवात् यथा चलोऽसौ ततः पृष्टव्यो भगवन् स एषोऽहं गमिष्यामीति ततश्चासावाचार्येण सदिष्ट इदमेव त्वया कर्त्तव्यमिति व्रज स चेदानीं गन्तुं प्रवृत्त इत्येतदेवाह

अप्पा हि अणुन्नाओ, ससहाउणीति जा पभायं तु ।
उवयोगं आसन्ने, करेइ गामस्स सा वय जयए ॥ ४३ ॥

सदिष्टः प्राक् पश्चादनुज्ञातो गच्छेति कथं ससहायः कियन्तं कालं यावत् ससहायो व्रजति तावत्प्रभातं आत सूर्योदय इत्यर्थः । ससहायश्च प्रभातं यावत् व्रजति स्वापदादिभयात् एवमसौ साधुर्व्रजन् ग्रामसमीपं प्राप्तः सन् किं करोतीत्याह । उपयोगं करोति विषयमुज्जयविषयं मूत्रपुरीषपरित्याग इत्यर्थः । कस्मादेवं चेत् ग्रामसन्निधान एव स्थण्डिलसद्भावात् गवादिसंस्थानात् । अथ रात्रौ गच्छतः कश्चिदपायः सभाव्यते ततः प्रभातं यावत् स्थातव्यम् । तथाचाह ।

हिमतेणसावयभया, दारा पिहिया पहं अजाणंतो ।
अत्थइ जाव पभायं, वासियभत्तं च से वसभा ॥ ४४ ॥

हिमं शीतं स्तेनाश्चौराः स्वापदानि सिंहादीनि एतद्भयात् प्रभातं यावदास्ते यदि पुरस्य द्वाराणि पिहितानि ग्रामस्य पथिकं पन्थानं वा अजानन् तिष्ठति यावत् प्रभातमिति । एवं च प्रभातं यावत् स्थिते गन्तरि वासिकभक्तं दोषान्नं ( से ) तस्य वृषभा गीतार्था आनयन्ति । अथ केन्यस्तदानीयते ।

ठवणाकुलसंखडीए, अणहिंडंते सिणेहपयवज्ज ।
गत्तट्ठियस्स गमणं, अपरिणयगाउये वहइ ॥ ४५ ॥

स्थापनाकुलेभ्यस्तथा ( संखडीएत्ति ) सामायिकी प्रायो भोजनप्रकरणार्थं तस्य वा के पुनस्तदानयन्त्यत आह ( अणहिंडतोत्ति ) ये भिक्षां पर्यटन्तिचन्त कस्मात्पुनस्ते भक्तमानयन्ति उच्यते तेषामहिण्डकाना गृहस्था गौरवेण प्रयच्छन्ति । कीदृश पुनस्तैर्भक्तमानयनीयम् ( सिणेहपयवज्जंति ) स्नेहेन घृतादिना पयसा क्षीरेण वर्जितं भक्तं गृह्णन्ति न तैलं आद्यम् अमङ्गलत्वात्, न घृतं परितापहेतुत्वात् । न दुग्धं भेदकत्वात् काञ्जिकविरोधित्वात् काञ्जिकं प्रायोपायित्वाच्च । सयताना किं पुनस्ते गृह्णन्ति दधिशक्कुकादि तदसौ भुक्त्वा व्रजति । तथा चाह ( गत्तट्ठियस्स गमणंति ) भुक्तवतस्ततो गमनं भवति अथ न तस्य भक्तं परिजातमित्यतोऽपरिणते भुक्ते सति स गव्यूतमात्रं यावन्मार्गं वहति क्रोशद्वयं च गव्यूतमिति । ओघ० । ( एगागिशब्दे एकाकित्वकारणानि तत्र दर्शयिष्यन्ते द्रष्टव्या )

एगल्लविहारपडिमा– एकाकिविहारप्रतिमा–स्त्री० एकाकिनो विहारो ग्रामादिचर्य्या स एव प्रतिमाऽभिग्रहः एकाकिविहारप्रतिमा । जिनकल्पप्रतिमायाम्, मासिक्यादिकाया भिक्षुप्रतिमाया च । अष्टभिश्च स्थानैः सम्पन्नोऽनगारोऽर्हत्येकाकिविहारप्रतिमाम् । तथा चाह ।

अट्ठहिं गणेहिं संपन्ने अणगारे अरिहइ एगल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तए तं जहा सड्ढी पुरिसजाए सच्चे पुरिसजाए मेहावी पुरिसजाए बहुस्सुए पुरिसजाए सत्तिमं अप्पाहिगरणे धिइमं वीरियमपन्ने ।

अष्टाभिः स्थानैर्गुणविशेषैः सम्पन्नो युक्तोऽनगारः साधुरर्हति योग्यो भवति । ( एगल्लत्ति ) एकाकिनो विहारो ग्रामादिचर्या स एव प्रतिमाऽभिग्रहः एकाकिविहारप्रतिमा जिनकल्पप्रतिमा मासिक्यादिका वा भिक्षुप्रतिमा तामुपसंपद्याश्रित्य एवमित्यलंकारे विहर्तु ग्रामादिषु चरितु तद्यथा ( सड्ढित्ति ) श्रद्धा तत्त्वेषु श्रद्धानमास्तिक्यमित्यर्थोऽनुष्ठानेषु वा निर्जाजिलापस्तच्छन्सकचनाकिनायकैरप्यच लनीयसम्यक्त्वचारित्रमित्यर्थः । पुरुषजातं पुरुषप्रकारं १ तथा सत्यं सत्यवादी प्रतिज्ञाशूरत्वात्सद्भ्यो हितत्वाद्वा सत्यम् २ तथा मेधा श्रुतग्रहणशक्तिस्तद्वन्मेधावी अथवा ( मेहावित्ति ) । मेधावी मर्यादावृत्तिः ३ तथा मेधावित्वाद्बहु प्रचुरं श्रुतमागमः सूत्रतोऽर्थतश्च यस्य तद्बहुश्रुतं तत्रोत्कृष्टतोऽसंपूर्णदशपूर्वधरं जघन्यतो नवमस्य तृतीयवस्तुवेदीति ४ तथा शक्तिमत्समर्थं पञ्चविधतुलनमित्यर्थस्तथाहि "तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य । तुलणा पचहा वुत्ता, जिणकप्पं पडिवज्जओत्ति" ५ अल्पाधिकरणं निष्कलहं ६ धृतिमच्चित्तस्वास्थ्ययुक्तमरतिरत्यनुलोमप्रतिलोमोपसर्गसहमित्यर्थः ७ वीर्यमुत्साहातिरेकस्तेन सम्पन्नमिति । इहाष्टानामेव चतुर्णां पदानां प्रत्येकमन्ते पुरुषजातशब्दो दृश्यते तदन्तपाठानामप्यत्र सम्बन्धनीय इति । अत्र चैवंविधोऽनगारः सर्वप्राणिना रक्षणक्षमो भवतीति । स्था० ८ ठा० ।

(सूत्रम्) जे भिक्खू गणाओ अवकम्म एकल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तए से य इच्छेज्जा दोच्चं पि तमेव गणं उवसंपज्जित्ताणं विहरित्तए पुणो आलोएज्जा पुणो पडिक्कमेज्जा पुणो छेयपरिहारस्स उवट्ठाएज्जा । २६ । एवं गणावच्छेइए । २७ । एवं आयरियउवज्झाए ॥ २८ ॥

भिक्खू य गणातो अवक्कम्म इत्यादि ॥ अथास्य सूत्रस्य पूर्वसूत्रेण सह कः सबन्धः । तत आह ।

निग्गमणं तु अहिकयं, अणुवत्तति वाहाधिकाराओ ।
तं पुण वितिण्णगमणं, इमं तु सुत्तं उभयहा वि ॥

अनन्तरसूत्रे पारिहारिकनिर्गमनमधिकृतमुक्तमिहापि तदेव निर्गमनमुच्यते । अथवा अनन्तरसूत्रे तपसोऽधिकारोऽनुवर्त्तते । इहापि स एव तपोऽधिकारः । तत्पुनरनन्तरसूत्रं निर्गमनमभिहितवत् । वितीर्णमनुज्ञातवत् इदं सूत्रं निर्गमनमनुज्ञयापि वितीर्णमवितीर्णं च ज्ञापते । अनेन सबन्धेनायातस्यास्य सूत्रस्य व्याख्या । भिक्षु प्रागुक्तशब्दार्थः । च पुनरर्थोऽवाक्यभेदे स च वाक्यभेदः सुप्रतीतः पूर्वसूत्रवाक्याद्वितीर्णगमनाभिधायिनोऽस्य सूत्रवाक्यस्य वितीर्णगमनाभिधायितया कथंचिद्भिन्नत्वात् । गणात् गच्छादवक्रम्य विनिर्गत्य एकाकिविहारप्रतिमा एकाकिविहारयोग्या मासिक्यादिका प्रतिमामुपसंपद्य विहरेत् । स च गणस्य स्मरति । संभाव्यते चैतत् तथा हि यः सूत्रार्थतदुभयैरव्यक्तोऽयथाविधिना प्रतिमा च प्रतिपद्यते स मा नद्भमुपैतु इति । ततः स गणं स्मरन् इच्छेत् । द्वितीयमपि वारम् । एकं वारं पूर्वमपि प्रव्रज्याप्रतिपत्तिकालगणमाश्रितवान् इदानीं द्वितीयं वारमतः उक्तं द्वितीयमपि वारं तमेवात्मीयं पूर्वमुक्तगुणगणमुपसपद्य पुनस्तमेकाकिविहारप्रतिमाभङ्गमालोचयेत् । गुरुसमीपे आलोच्य पुनः पुनरकरणतया तस्मात्स्थानात्प्रतिक्रम्य च यदापन्नं प्रायश्चित्तं छेदं परिहारं वा तस्य छेदस्य परिहारस्य वा करणाय पुनरुपतिष्ठेत इह प्रतिमाप्रतिपन्नेन यत्रैवाकृत्य समासेवितं तत्रैवाह । दुष्टुकृतं मयेत्यादि चिन्तनतस्तदालोचितं प्रतिक्रान्तं च । गुरुसमक्षं तु द्वितीयवारमिति पुनः शब्दोपपत्तिरेष सूत्रसंक्षेपार्थः

विस्तरार्थं भाष्यकृदाह ।

संथरमाणस्स विही, आयारदसासु वणिनो पुव्विं ।
सो चेव य होइ विही, तस्स विभासा इमा होति ॥

संस्तरन् नाम उच्यते यः सूत्रोक्तविधिना प्रतिमाप्रतिपत्तियोग्यतामुपागतः मासिक्यादीनां च प्रतिमानां मध्ये यां प्रतिमां प्रतिपन्नस्तां सम्यक्परिपालयितुं क्षमस्तस्य संस्तरतो विधिः समाचारी। आचारप्रधाना दशा आचारदशास्तासु दशाश्रुतस्कन्धेष्वित्यर्थः । भिक्षुप्रतिमाध्ययने पूर्वं वर्णितः स एव इहापि अस्मिन्नप्यधिकृतसूत्रव्याख्याप्रस्तावे परिपूर्णो भवति ज्ञातव्यः तस्य प्रस्तावायातत्वात् । तथाहि एकाकिविहारप्रतिमामुपसंपद्य विहरेदित्युक्तं ततः साक्षादुपात्ता एकाकिविहारप्रतिमेति भवति । तद्विधिप्ररूपणावसरः । केवलं तत्र भिक्षुप्रतिमाध्ययने प्रतिपाद्य इति तत एवावधारणीयः । इह पुनस्तस्यैकाकिविहारप्रतिमाविधिर्विभाषा कर्त्तव्या । यथा ईदृशस्य एकाकिविहारि प्रतिमाप्रतिपत्तिः कल्पते अनेन च प्रकारेण प्रतिपद्यते । ईदृशश्च एकाकिविहारिप्रतिमाया अयोग्य इति । सा इयं वक्ष्यमाणा भवति । तामेवाभिधित्सुराह ।

घरसउणिसीहपव्वज्ज-सिक्खपरिकम्मकरणं दो जोद्दा ।
कालोलगच्छखमहुग, गच्छाएगा ततो नीती ॥

परिकर्म्मकरणे द्वौ दृष्टान्तौ तद्यथा गृहेऽवस्थितः शकुनिर्गृहशकुनिस्तथा सिंहश्च वने व्यवस्थित इति गम्यते तथा ( पव्वज्जसिक्ख ) प्रव्रजनं प्रव्रजितं प्रव्रज्या इत्यर्थः । शिक्षा ग्रहणासेवनरूपं शिक्षाद्विकं एते द्वे द्वारे वक्तव्ये एतच्च शेषद्वाराणामर्थग्रहणादीनामुपलक्षणमतस्तान्यपि वक्तव्यानि । तत परिकर्मकरणं वक्तव्यं तदनन्तरं परिकर्म्मितः परिज्ञाय द्वौ योधौ दृष्टान्तौ वक्तव्यौ । ततः स्थिरीकरणनिमित्तं तस्योपसर्गव्यावर्णनाय सूत्रार्थकरणव्यवस्थितकालरूपं अपकतिकज्ञातं वक्तव्यम् । ततः एवं कृतपरिकर्म्मा सन् गच्छादापात सर्वर्तुकपुष्पफलोपगमागमरूपात् गच्छाद्विनिर्गच्छति । एष द्वारगाथासंक्षेपार्थः ।

सांप्रतमेनामेव विवरीषुः प्रथमतो गृहशकुनिदृष्टान्तं भावयति ॥

वासगयं तु पोसति, चंचूपूरेहि सउणिया सावं ।
चारेइ य उड्डुंतं, जाव समत्थं न जायं तु ॥

शकुनिका पक्षिणी आत्मीयं शावं ( वासगयंति ) प्राकृतत्वादाकारस्य लोपः आवासगं नीडमावासगतं नीडगतं तुरेवकारार्थः। आवासकगतमेव शावं चञ्चूपुरैश्चञ्चूपूरणैः पुष्णाति पुष्टीकरोति । यदि कथमप्यसजातपक्षोऽपि चापलेनावासाद्वहिर्निर्गमिषुरुड्डीयते ततस्तमुड्डीयमानं वारयति प्रतिषेधयति । सा चैव तावत्करोति यावत्समर्थो न जायते । गाथायां तु नपुंसकनिर्देशः प्राकृतत्वात् । समर्थस्तु जातः सन् प्रतिषिध्यते । ततो निरुपद्रवः स्वेच्छया विहरति । भावितः शकुनिदृष्टान्तः ॥

सम्प्रति सिंहदृष्टान्तं भावयति ॥

एमेव वणे सीही, सा रक्खइ छावपोयगं गहणे ।
खीरमिउपिसियचब्विय, जा खायइ अट्ठियाइं पि ॥

एवमेव शकुनिकागतेनैव प्रकारेण वने किं विशिष्टे इत्याह गहने अतिशयेन शुषिरे स्थिता सती सिंही शावपोतकं शाव एवातिलघुत्वात् पोतः पोतकः शावपोतकस्तं रक्षयति । व्याघ्रादिभ्यस्तथा क्षीरेण स्तन्येन मृदुचर्वितपिशितेन च तावदात्मीयं शावपोतकं पुष्णाति यावदस्थीन्यपि खादति ॥

मारियममारिएहिं, ता तीरावेति छावएहिं तु ।
वणमहिसहत्थिवग्घाण, पच्चलो जाव सो जातो ॥

वनमहिषादीनां शावकैर्मारितैरमारितैर्वा तावन्तमात्मीयशावं तीरयति समर्थीकरोति यावत्तेषां वनमहिषहस्तिव्याघ्राणां स्वयमेव व्यापादने प्रत्यलः समर्थो जातो भवति । कृता सिंहदृष्टान्तभावना ॥

सांप्रतमनयोरेव निदर्शनयोरुपमानार्थमिदमाह ॥

अकयपरिकम्मसहू, दुविहा सिक्खा अकोवियमवत्तं ।
पडिवक्खेण उवमियो, सउणिगसीहादिछावेहिं ॥

न कृतानि परिकर्म्माणि वक्ष्यमाणानि येन स तथा तमकृतपरिकर्माणमकृतपरिकर्मत्वादेवासहमेकाकिविहारप्रतिमां प्रतिपत्तुमसमर्थम् । तथा द्विविधायां शिक्षायां ग्रहणासेवनरूपायामकोविदमनभिज्ञम् । तथा श्रुतेन वयसा वा प्राप्तयोग्यताक ( पडिवक्खेणंति ) ये ये प्राक् शकुनिपोतसिंहशावकानां सजातपक्षत्वादयो गुणा उक्तास्तेषां प्रतिपक्षेण प्रातिकूल्येनासजातपक्षत्वादिना विशिष्टाः शकुनिसिंहादिशावकाः आदिशब्दात् व्याघ्रादिपरिग्रहस्तैरुपमितस्तथाहि यथा शकुनिपोतोऽसजातपक्षो यदावासाद्विनिर्गत्य स्वच्छन्दमापरिभ्रमति ततः स काकढङ्कादिभ्यो विनाशमाप्नोति । सिंहपोतकोऽपि यदि क्षीराहारो गुहातो विनिर्गत्य वने स्वेच्छया विहरति ततः सोऽपि वनमहिषव्याघ्रादिभिरुपद्रूयते । एवं साधुरप्यकृतपरिकर्मा द्विविधशिक्षायामकोविदः श्रुतेन वयसाऽप्राप्तयोग्यताको यदि गच्छादेकाकिविहारप्रतिमाप्रतिपत्तये विनिर्गच्छति ततः स नियमादात्मविराधनां संयमविराधनां च प्राप्नोतीति । तदेव "घरसउणिसीहत्ति" व्याख्यातम् । सम्प्रति प्रव्रजितशिक्षादीनि द्वाराणि वक्तव्यानि । तत्सङ्ग्राहिका चेयं गाथा ।

पव्वज्जा सिक्खावय-मत्थग्गहणं च अणियतो वासे ।
निप्पत्तियवीहारो, सामायारी ठिती चेव ॥

अस्या व्याख्यानं कल्पे सविस्तरमुक्तमत्र तु लेशतोऽर्थमात्रमभिधीयते । प्रथमतस्तावत्प्रव्रज्या भवति । सा च द्विविधा धर्म्मश्रवणतोऽभिसमागमतश्च तत्र या आचार्यादिभ्यो धर्म्मदेशनामाकर्ण्य संसाराद्विरज्य प्रतिपद्यते सा धर्म्मश्रवणतः या पुनर्जातिस्मरणादिना सा अभिसमागमतः । प्रव्रजितस्य च शिक्षापदं भवति । शिक्षा च द्विधा ग्रहणशिक्षा आसेवनाशिक्षा च । तत्र ग्रहणशिक्षा सूत्रावगाहनम् आसेवनाशिक्षा सामाचार्यभ्यसनं शिक्षापदनन्तरं चार्थग्रहणकरणं तदनन्तरं चानियतो वासो नानादेशपरिभ्रमणं कर्त्तव्यं यतस्तमन्तरेण नानादेशीयशब्दाकौशलेन नानादेशीयशिष्यात्मकस्य सूत्रस्य परिस्फुटपूरणार्थनिर्णयकारित्वानुपपत्तेः । तदनन्तरं वाचनाप्रदानादिना गच्छस्य निष्पत्तिर्निष्पादनं कर्त्तव्यम् । तदनन्तरं विहारोऽभ्युद्यतो विहारो जिनकल्पादिप्रतिपत्तिलक्षणः करणीयः । तस्य च विहारस्य या सामाचारी सा वक्तव्या । तथा स्थितिर्जिनकल्पादीनां क्षेत्रकालादिद्वारेषु चिन्तनीया । तत्र प्रव्रज्या, शिक्षा, पदमर्थग्रहणमनियतो वासः, निष्पत्ति-विहारः, सामाचारीति सप्त द्वाराणि प्रतिमायामुपयोगीनि । तत्रापि प्रव्रज्या शिक्षापदमर्थग्रहणं चेति । त्रीणि द्वाराणि प्रतिमां प्रतिपत्तुकामस्य नियमतो भवन्ति शेषाणां भजना तथा चाह ॥

पव्वज्जासिक्खावय-मत्थग्गहणं च सेसए भयणा ।

सामायारिविसेसे, नवरं वुत्तो उ पडिमाए ॥

प्रव्रज्या प्रव्रजनशिक्षापदमर्थग्रहणमनियतो वास शिक्षाद्विकमर्थे ग्रहणमर्थपरिज्ञानमित्येतत् त्रयप्रतिपित्सोर्नियमेन भवति शेषिके अनियतवासनिष्पत्तिलक्षणद्वारद्विके भजना विकल्पना य आचार्यपदार्हस्तस्य नियमादिद द्वारद्वयमस्ति शेषस्य तु नास्तीत्यर्थः । विहार पुन प्रतिमाप्रतिपत्तिलक्षणोऽस्त्येव सामाचार्यो अपि जिनकल्पिकसामाचारीतो विशेषोऽस्ति नवर सामाचारीविशेष प्रतिमायां प्रतिमागतो दशाश्रुतस्कन्धे भिक्षुप्रतिमामध्ये योऽन्य उक्त प्रतिपादित इति स न पुनरुच्यते । सम्प्रति परिकर्म्मकरण वक्तव्यम् । तत्र पर आह ननु तत्परिकर्म्म किं गच्छ एव स्थित करोति उत गच्छाद्विनिर्गत्येति । सूरिराह ।

गणहरगुणेहि जुत्तो, जति अन्नो गणहरो गणे अत्थि ।
निग्गति गणातो इहरा, कुणति गणे चेव परिकम्म ॥

यदि नाम गणे गच्छे अन्योऽन्यगणधरः गणधरपदार्ह इत्यर्थः । गणधरगुणयुक्तो विद्यते न च प्रयोजनेनान्यत्र गतस्ततस्तं गणे स्थापयित्वा गणाद्विनिर्गच्छति विनिर्गत्य च परिकर्म्म करोति । इतरथा तथाविधान्यगणधरयुक्तगणधरस्वार्हाभावे गण एव स्थित सन्परिकर्म्म करोति अत्र पर आह । ननु तेन पूर्वद्विधा शिक्षा शिक्षमाणेनात्मा भावित एव ततः किमिदानीं भावनाभि परिकर्म्मणयेत्यत आह ।

जइ विहु दुविहा सिक्खा, आइल्ला होंति गच्छवासम्मि ।
तहवि य एगविहारे, जा जोग्गा तीए भावेंति ॥

यद्यपि द्विविधा शिक्षा आद्यसूत्रग्रहणसामाचार्यासेवनलक्षणा भवति गच्छवासे तथापि गच्छवासे योग्यतात एकाकिविहारे या योग्या शिक्षा तद्योग्यसामाचार्यभ्यासरूपा तया स आत्मान भावयति तद्भूतसामाचार्यभ्यासश्च पञ्चभिर्भावनाभिर्भवति । ततस्ताभिर्विशेषत आत्मानं परिकर्म्मयति ।

तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य ।
तुलणा पंचहा वुत्ता, पडिमं पडिवज्जतो ॥

प्रतिमां प्रतिपद्यमानस्य प्रपित्सुकामस्य तुलना परिकर्म्मणा । पञ्चधा पञ्चप्रकारा प्रोक्ता तद्यथा तपसा सत्वेन सूत्रेण एकत्वेन बलेन च । तत्र तपोभावनाप्रतिपादनार्थमाह ।

चउभत्तेण उ जतते, छट्ठेहि अट्ठमेहिं दसमेहिं ।
वारसचउद्दसमेहि य, धीरो धीमं तुलेऽप्पा ॥

प्रथमतश्चतुर्थेन यतते । किमुक्तं भवति । प्रथमतो नियमेन त्रीन् वारान् चतुर्थं करोति तत्र यदि त्रिरपि कृते चतुर्थे क्लाम्यति ततस्तावदभ्यस्यति चतुर्थं यावच्चतुर्थं कुर्वन् मनागपि न क्लाम्यमुपयाति । एव चतुर्थेन यतित्वा त्रीन्वारान्षष्ठ करोति तत्रापि यदि वारत्रय कृते षष्ठे क्लाममुपैति ततश्चतुर्थवत् षष्ठेऽप्यभ्यास तावत्करोति यावत्तस्यापि करणे ग्लानिर्नोपपद्यते एव षष्ठैरात्मान भावयित्वा अष्टमैर्भावयति । तदनन्तर दशमैस्ततो द्वादशैरुपलक्षणमेतत् ततोऽनेन प्रकारेण पौरुष्यादि मिश्च धीरो धृतिमान् आत्मान तुलयति परिकर्म्मयति स च तावत्तुलयति । यावत्षण्मासान् सोपसर्गेऽपि न क्षुधाद्यानिमुपगच्छति उक्तञ्च ।

जाव णवक्कारो पोरिसि-माई तवो उ तं तिगुणं ।
कुणइ छुहा वि जइड्डा, रिगिनदिसीहेण दिट्ठंतो ॥
एकेक्कं ताव तवं, करेति जह तेण कीरमाणेणं ।

हाणी न होइ जइया वि, होज्ज छम्मास उवसग्गो ॥

तत्र यदुक्त चतुर्थादिषु तावदभ्यास करोति यावन्न क्लाम्यति तत्र गिरिनदीसिंहदृष्टान्त । तथाहि यथा सिंहो गिरिनदीं तरन् परतटे चिह्न करोति यथा अमुकप्रदेशे वृक्षाद्युपलक्षिते मया गन्तव्यमिति सचरन् तीक्ष्णेनोदकवेगेनापह्रियते । तत प्रत्यावृत्त्योत्तरति । एव प्रमाणतस्तावत्तरण करोति यावदभग्न सन् सकलामपि गिरिनदीं शीघ्र तरति । एव साधुरपि यदि चतुर्थं षष्ठमष्टमादि वा त्रीन् वारान् कृत्वा क्लम याति ततश्चतुर्थादिक प्रत्येक तावदभ्यस्यति यावन्न क्लाम्यतीति । तथा चैनामेव सिंहदृष्टान्तयोजनामाह ।

जह सीहो तह साहू, गिरिनादिसीहो तवोधणो साहू ।
वेयावच्चकिलंतो, अभिन्नरोमो य आवासे ॥

यथा सामान्येन गुहाया वर्त्तमानः सिंहस्तथा गच्छे वर्त्तमानः साधुर्यथा च गिरिनदीमुत्तरन् अभ्यासकरणे प्रवृत्त सिंहस्तथा तपोधन तप करणाभ्यासप्रवृत्त साधु । एव चतुर्थषष्ठाष्टमादि तप कुर्वन् स आत्मवैयावृत्त्यकरो ज्ञातव्य । कस्मादिति चेदुच्यते । यस्मात्स तपसा पूर्वसञ्चित कर्म्ममल शोधयन्नात्मन एवोपकारे वर्त्तते । तत स आत्मवैयावृत्त्यकरः एवमात्मनो वैयावृत्त्ये अक्रान्त सन् ( आवासेत्ति ) अवश्यकरणीयेषु योगेषु न भिन्नरोमा भवति । गत तपोभावनाद्वारम् ।

अधुना सत्वभावनाद्वारमाह ।

पढमा उवस्सयम्मि, बिइया वाहिं तइया चउक्कम्मि ।
सुण्णघरम्मि चउत्थी, पचमिया तह मसाणम्मि ॥

प्रथमा सत्वभावना उपाश्रये कथमिति चेत् उपाश्रयस्यान्तर्निशि प्रतिमया प्रतिदिवसमवतिष्ठते स च तथावतिष्ठमानो मूषिकमार्जारादिस्पर्शनदर्शनादिभय तावद् जयति यावत्तत्स्पर्शनादिभावे रोमोद्भेदमात्रकरमपि भय नोपजायते । उक्तच "उक्कस्स य खज्जस्स य, मूसियमाईहि वा निसिन्नरोहि । जह न विजायइ रोमु-ग्गमो वि तह चेव वाहोवा " द्वितीया सत्वभावना उपाश्रयस्य बहिरुपच्छन्ने तत्र हि प्रतिमां प्रतिपन्नस्य बहुतरं मार्जारादिभय सम्भवति । ततस्तज्जयार्थं द्वितीया । भवसत्वभावना तृतीया सत्वभावना चतुष्के तत्रातिप्रभूततरं त्रिविधं तस्करादिकस्वापदादिभ्यो भयम् । चतुर्थी शून्यगृहे, पञ्चमीका स्मशाने । तत्र हि यथोत्तरं सविशेषा सविशेषतरा त्रिविधा वाधा उक्तञ्च 'सविसेसतरा वाहि, तक्करआरक्खिसावयाईया । सुण्णघरमसाणेसु य, सविसेसतरा भवे तिविहा' एताभि पञ्चभिरपि सत्वभावनाभिस्तावदात्मान भावयति यावद्दिवा रात्रौ वा देवैरपि भीमरूपैर्न चालयितु शक्यते । उक्तं च " देवेहिं भेसिया अवि दिया वा रातो वा भीमरूवेहिंतो सत्तभावणाए वहति भर निब्भतो सगल" । गता सत्वभावना ।

संप्रति सूत्रभावनामाह ।

उक्कवितोवकवियाइं, सुत्ताइ करेइ सोयव्वाइं ।
सुत्तद्धपोरिसीतो, दिणे य काले अहोरत्ते ॥

सोऽधिकृतप्रतिमाप्रतिपत्तिनिमित्त परिकर्म्मकारी साधु सर्वाण्यपि सूत्राणि उत्कवितोऽपकवितानि करोति । किमुक्त भवति उपरितनादारभ्योत्करेण योऽवतरति मूलाद्या समारभ्य क्रमेणोपर्युपर्यवगाहते । एकान्तरिताया एकग्रहणेन सर्वं मूलादारभ्य तावत्परावर्त्तयति यावत्पर्यन्त । तत उपरितनभागादारभ्य गुणित मुञ्चन् सर्वमगुणित तावत्पश्चादानुपूर्व्या गुणयति

उग्गहम्मि परे एयं, लभते उ अखेत्तितो ।
वत्थगादी वि दिन्न तु, कारणम्मिव सो लभे ॥

नालबद्धाः पूर्वसंस्तुता, पश्चात्संस्तुतानि मित्राणि,वयस्याश्च । एतत्सचित्ते परे परकीये अवग्रहे अक्षेत्रिको लभते । अचित्ते आहारम् अशनाऽऽदिकम्,प्रश्रवणमात्रक,खेलमात्रक च संस्तरक परिशाटिरूपमपरिशाटिरूप वा वसतिं च वस्त्राऽऽदिक पुनर्दत्त लभते।कारणे अतिस्तरणाऽऽदिलक्षणे पुनरदत्तमपि लभते। तदेव गत क्षेत्रद्वारम् । व्य० १० उ० ।

एकक्षेत्रे उपसपद्यमानानां कस्य क्षेत्रमाभवति मम्प्रति "साहरणपत्तेग" इत्यादि व्याख्यानयति–

दोमादि त्रिया साहर–णम्मि सुतत्थकारणा एके।
जति तं उवसंपज्जे, पुव्वठिया वी य सेकतं ॥

द्व्यादयो द्विप्रभृतयो गच्छाः समासकल्पाः । समकमेकस्मिन् क्षेत्रे स्थितास्तेषां तत् क्षेत्रम् आभाव्यतया साधारणम् । तस्मिन् साधारणे क्षेत्रे स्थिता सन्तो यदि तमेके गच्छमन्ये सूत्रार्थ कारणादुपसपद्यन्ते । अथवा–ये पूर्वं समासकल्पतया स्थितास्तेषाम् आभवति तत् क्षेत्रम् । न पश्चादागतानां समासकल्पानामपि । पर ते पूर्वस्थिता अपि यदि पश्चादागत गच्छ सूत्रार्थकारणादुपसपद्यन्ते ! तर्हि–यस्य समीपमुपसपद्यन्ते तस्य तत्क्षेत्र सक्रान्त तस्य तदाभवति । नान्येपामिति भावः । ते हि तस्य प्रतीच्छकीभूतास्तेन तेषां क्षेत्रमितरस्य सक्रामतीति । अथ नोपसपद्यन्ते । किं तु सूत्रमर्थं वा पृच्छन्ति ।

तत्राऽऽह–

पुच्छाहि तीहि दिवसं, सत्तहिँ पुच्छाहिँ मासियं हरति ।
अक्खेत्तुवस्सए पु–च्छमाणे दूराऽऽवलियमासो ॥

तिसृभि पृच्छाभिः कृताभि पृच्छ्यमान परिपूर्ण दिवस यावत् तत्क्षेत्रगत सचित्तादि हरति गृह्णाति । त्रिपृच्छादानतस्तस्य क्षेत्रस्यैकं दिवसं यावत्तदाभवनात् । सप्तभिः पृच्छाभिर्मासिक हरति । किमुक्त भवति–सप्तपृच्छासु कृतासु पृच्छ्यमानः परिपूर्णमास यावत्तत्क्षेत्रगत सचित्तादि लभते मास यावत्तस्य क्षेत्रस्य तदाभवनादिति । ( अक्खेत्तुवस्सए इति ) अक्षेत्रे स्थितानामुपाश्रये विशेषा मार्गणा कर्त्तव्या । सा चाऽऽग्रे करिष्यते । तथा–यदि पृच्छ्यमान आत्मीयमुपाश्रय दूरम्, उपलक्षणमेतत् आसन्न वा। आवलिकाप्रविष्टम् उपलक्षणमेतत् मण्डलिकाप्रविष्ट वा, पुष्पाऽऽवकीर्ण वा कथयति । तदा तस्मिन् प्रायश्चित्त मासो लघुक ,त च पृच्छन्त लभन्ते। एष सक्षेपार्थो व्यासार्थोऽग्रे कथयिष्यते । अक्षेत्रे उपाश्रयस्य मार्गणा कर्त्तव्येत्युक्तम् ।

तत्र तावदक्षेत्रमाह–

एहाण ऽणुजाणं अद्धाण, सीसए कुलगणे चउके य ।
गामादिवाणमतर–हेय उज्जाणमादीसु ।
इंदकीलमणोग्गाहो, जत्थ राया जेहिं व पंच इमे ।
अमच्चपुरोहियसेट्ठी–सेणावतिसत्थवाहा य ॥

स्नानमर्हत प्रतिमानां तन्निमित्तमेकत्र मिलितानामनुयानं रथयात्रा तन्निमित्त मिलितानाम् । अथवा–ऊर्ध्वं शीर्षक यत पर समुदायेन सार्थेन सह गन्तव्य सम्यग् मार्गवहनात् । तत्र मिलितानां ( कुल त्ति ) कुलसमवायमिलितानाम् ( गण त्ति )गणसमवायमिलितानां चतुष्क सङ्घः तत्समवायमिलितानाम् (गामाइ) इत्यादि । ग्राममहे वा,आदिशब्दान्नगराऽऽदिमहे वा,उद्यानमहे वा, आदिशब्दात्तडागाऽऽदिमहेषु वा । इन्द्रकीलकमहे वा यत्र च सकलजनमनोग्राही राजा यत्र वा इमे अमात्यपुरोहितश्रेष्ठिसेनापतिसार्थवाहाः पञ्च गता वर्त्तन्ते । तत्र कथमपि गताः समक स्थिताः तर्हि साधारणा वसति । अथ विषम स्थितास्तर्हि य पूर्वं स्थितास्तेषां वसतिः आभवति । नतरेषां पश्चादागतानाम् । तस्यां च वसतौ यः शिष्यतया उपतिष्ठति त वसतिस्वामिनो लभन्ते नेतरे ।

"पुच्छमाणे दूराऽऽवलियमासो" इत्यस्य व्याख्यानार्थमाह—

पुप्फाऽवकिण्णमण्डलि–याऽऽवलिय उवस्सया भवे तिविहा।
जो अब्भासे तस्स उ, दूरं कहंतो न लभे मासो ॥

क्वचित् ग्रामे नगरे वा साधवः पृथक् उपाश्रये स्थिताः । ते चोपाश्रयास्त्रिविधा भवेयु । तद्यथा-पुष्पाऽवकीर्णका ,माण्डलिकावद्धाः , आवलिकास्थिता वा । स्थापना

| | | |
|---|---|---|
| ००००० | ०००० | |
| ०००००० | ० ० | ०००० |
| ००००० | ०००० | |

एतेषामुपाश्रयाणां मध्ये कुतश्चित्कतरस्मादुपाश्रयाद्विचारादिनिमित्तं कोऽपि विनिर्गतस्त दृष्ट्वा कोऽपि प्रविव्रजिषुः पृच्छेत् । यथा-कुत्र साधूनां वसतिरिति । स ब्रूते-किं कारण त्व पृच्छसि ?। शिष्य प्राह–प्रव्रजिष्यमीति । तत्र यदि स एवं पृष्टः सन् ( दूरे कहतो न लभे मासो इति ) आत्मीयमुपाश्रय दूरम्, आसन्न वा कथयति । तर्हि तस्य प्रायश्चित्त लघुको मास । न च त शिष्य लभते । कस्य पुनः स आभवतीति चेत् ? । तत आह–योऽभ्यासे तस्य किमुक्त भवति–तस्मादवकाशात् यस्य प्रत्यासन्नतर उपाश्रयस्तस्य आभवति ।

किह पुण साहेयव्वा, उद्दिसियव्वा जहक्कमं सव्वे ।
अह पुच्छइ संविग्गे, तत्थ व सव्वे व अद्धा वा ॥

कथ पुन कथयितव्या उपाश्रया ?। सूरिराह–उद्देष्टव्या यथाक्रम सर्वे । यथा-अमुकस्याऽमुकप्रदेशे । एव कथिते यत्र व्रजति तस्य स आभवति । अथ पृच्छति संविग्नान् बहुश्रुततरान् तपस्वितरांश्चेत्यर्थः।तत्र यथाभावमाख्यातव्यम् । वितथाऽऽख्याने मासलघु । न च स त लभते। किं-तु ये तपस्वितरा बहुश्रुततराश्च तेषां स आभवति। अथ सर्वे अर्द्धा वा संविग्नास्ततस्तथैवाऽऽख्याने यत्र स व्रजति तस्य स आभवति। न शेषस्येति ।

एतदेव सविशेषमाह–

मुत्तूण असंविग्गे, जे जहियं ते य साहती सव्वे ।
सिट्ठम्मि जेसि पास, गच्छति तेसिं न अन्नेसिं ॥

इह ये पार्श्वस्थाऽऽदयोऽसंविग्नास्ते यदि पृच्छ्यन्ते तदा ते न कथनीयास्तेन मुक्त्वा शेषेषु पृष्टेषु ये यत्र विद्यन्ते तान् तत्र सर्वान् कथयति । शिष्टे च कथिते सति, येषां पार्श्वं गच्छति तेषामाभवति । नाऽन्येषाम् ।

नीयल्लगाण व भया, हिरिवत्ति असंजमाऽहिगारे वा ।
एमेव देसरज्जे, गामेसु व पुव्वकहणं तु ॥

इह कोऽपि तस्मिन् ग्रामे नगरे देशे राज्ये वा न प्रव्रजति । किं-

सा असमाप्तकल्पा विष्वक् पृथक् स्थिता भवेयुस्तेषां न भवति क्षेत्रम्। आव्याम्समाप्तकल्पत्वात्। अथ पुनः-सुखदुःखादिनिमित्तं समनोज्ञतां परस्परोपसम्पदं कुर्वन्ति। ततो भवति तेषामाभाव्यं क्षेत्रम्। परस्परोपसम्पदा समाप्तकल्पीभूतत्वात्। अथ तेषां कः प्रभुः? उच्यते-यो रात्निको रत्नाधिको यस्य पर्यायाधिकतया वन्दनादीनि क्रियन्ते ( सि ) तेषां प्रभुर्लाभ पुनर्यस्तत्र भवति स सर्वेषां सामान्य साधारण सर्वेषामप्याचार्यत्वाद्युपाध्यायत्वाद्वा।

अहवा जइ बीसु वीसु, ठिया उ सम्मत्तकप्पिया हुज्जा।
अण्णो समत्तकप्पी, एज्जाही तस्स त खेत्त ॥

अथवा-असमाप्तकल्पिका यदि विष्वक्विष्वक्स्थिता भवेयुरन्यः समाप्तकल्पः समाप्तकल्पोपेतः पश्चादागच्छेत् तस्य तत् आभवति क्षेत्रम्। नेतरेषां पूर्वस्थितानामपि असमाप्तकल्पत्वात्।

अहवा दोण्णि व तिण्णि व, समगं पत्ता समत्तकप्पोओ।
सव्वेसिं वी तेसिं, तं खेत्त होइ साहरणं ॥

अथवा-द्वौ वा, त्रयो वा, गच्छाः समाप्तकल्पिनाः पृथक् पृथक् कल्पोपेताः समकं प्राप्तास्ततस्तेषां सर्वेषामपि तत्क्षेत्रम्। आभाव्यतया साधारणं भवति।

अपुण्णकप्पो व दुवे तओ वा,
न कालकुज्जा समणुण्णयं तु।
तक्कालपत्तो य समत्तकप्पो,
साहारणं त पि हु तेसि खेत्तं ॥

अपूर्णकल्पा असमाप्तकल्पा द्वौ त्रयो वा गच्छाः स्थिताः न च परस्परमुपसम्पत् गृहीता पश्चात् सूत्रार्थाऽऽदिनिमित्तमुपसम्पद् गृहीतुमारब्धा। ते च यत्काले यस्मिन्काले समनोज्ञतां परस्परमुपसम्पदं कुर्युः कुर्वन्ति। तत्कालप्राप्तस्तस्मिन्काले प्राप्तोऽन्यः समाप्तकल्पस्तेषामपि तत् क्षेत्रम् भवति साधारणम्। परस्परोपसंपद्ग्रहणवेलायामेव समाप्तकल्पस्याऽपि प्राप्तत्वात्।

सम्प्रति परस्परोपसम्पन्नानां साधारणाऽवग्रहाऽवस्थितानां सूत्रमर्थं वाऽधिकृत्य य आभवनविशेषस्तमभिधित्सुराह-

साहारणट्ठियाणं, जो भासति तस्स तं व हरति खेत्तं।
वारगत दिण पोरिसि, मुहुत्त भामे उ जे ताहे ॥

साधारणस्थितानां साधारणाऽवग्रहाऽवस्थितानां मध्ये यः सूत्रमर्थं वा भाषते। तस्य तद्भवति क्षेत्रम्। न शेषाणाम्। अथ ते वारवारेण भाषन्ते। तत आह-यो यदा वारकेण दिनं, पौरुषीं मुहूर्त्तं वा भाषते। तस्य तावन्तं कालमाभाव्यम्। न शेषकालम्। इयमत्र भावना-यो (यति) दिवसं भाषते तस्य (तति) दिवसानाभाव्यम्। अथवा-प्रतिदिवसं यो (यति) पौरुषीर्भाषते तस्य ( तति ) पौरुषीरवग्रहः। यदि वा-यो (यति) मुहूर्त्तान् भाषते तस्य तावत्कालमवग्रहः। न शेषकालमपीति।

आवलिया मण्डलिया, घोडगकण्डूइए व भासेज्जा।
सुत्त भासतिमा-सा इयादि जा अट्ठसीतिं तु ॥

इह सूत्रस्याऽर्थस्य वा भाषणे त्रयः प्रकाराः। तद्यथा-आवलिकया मण्डल्या घोटककण्डूयितेन च तया विच्छिन्ना एकान्ते भवति मण्डली सा आवलिकाया। पुनः सस्थान एव सा मण्डली घोटकण्डूयितं नाम यत्वार वार परस्परं प्रच्छन्नं तत्तयोः परस्परं कण्डूयितमिव घोटककण्डूयितं तत्र सूत्रमर्थं वा भाषते। आवलिकया मण्डलिकया घोटककण्डूयितेन वा तत्र सूत्रं भाषते। सामायिकाऽऽदि तावत् यावत् दृष्टिवादगतान्यष्टाऽशीतिसूत्राणि। पूर्वेषु तु विशेषो वक्तव्य इति तदनुपादानम्। सम्प्रति यथाक्रमप्रमाणं आवश्यकप्रतिप्रच्छकस्य समीपे दशवैकालिकमधीते दशवैकालिकवाचनाऽऽचार्यस्य भवति क्षेत्रम्। तथा एकस्य पार्श्वे दशवैकालिकमधीते दशवैकालिकवाचनाचार्यः। पुनर्दशवैकालिकप्रतिप्रच्छकस्य पार्श्वे उत्तराध्ययनान्यधीते उत्तराध्ययनवाचनाऽऽचार्यस्य आभाव्यं क्षेत्रम्। एवं यथोत्तरं तावद्भावनीयं यावदष्टाऽशीतिसूत्राणि।

सुत्ते जहुत्तरं खलु, बलिया जा होति दिट्ठि वातो ति।
अत्थे वि होइ एवं, छेअसुअस्स नवरिमुत्तु ॥

यथा-सूत्रे यथोत्तरं बलिष्ठता एवमर्थेऽपि भावनीया। तद्यथाएक एकस्य पार्श्वे आवश्यकार्थवाचनाचार्ये पुनरावश्यकाऽर्थ-प्रतिप्रच्छकस्य समीपे दशवैकालिकार्थवाचनाऽऽचार्यस्य आभवति क्षेत्रम्। एवं तावद्वाच्यं यावदष्टाशीतिसूत्रार्थमुक्त्वा अथाऽऽचार्याणामुपरि छेदसूत्राऽर्थाऽऽचार्यो वक्तव्यः। तद्यथा-एकस्य पार्श्वे दृष्टिवादगतानामष्टाशीतेः सूत्राणामर्थमधीते, अष्टाशीतिसूत्रार्थ-वाचनाचार्ये। पुनरष्टाशीतिसूत्रार्थप्रतिप्रच्छकस्य समीपे छेदसूत्रार्थमधीते, छेदसूत्रार्थवाचनाचार्यस्य आभाव्यं तत् क्षेत्रम्।

एमेव मीसगम्मि वि, सुत्तातो बलवगो पगासो उ।
पुव्वगय खलु बलियं, हेट्ठिल्लत्था किमु सुयातो ॥

एवमेव अनेनैव प्रकारेण मिश्रकेऽपि सूत्राऽर्थरूपोभयस्मिन्नपि वक्तव्यं सर्वत्र सूत्रात् बलवान् प्रकाशोऽर्थस्य प्रकाशक तद्यथाएक एकस्य पार्श्वे आवश्यकसूत्रमधीते। तस्य समीपे पुनः सूत्रवाचनाचार्ये आवश्यकस्यार्थमधीते। आवश्यकार्थवाचनाचार्यस्य आभवति तत् क्षेत्रम्। एवं तावद्भावनीयं यावदष्टाशीतिसूत्रार्थे वाचनाऽऽचार्ये सर्वत्राऽधस्तनात्सूत्रादर्थाद्वा पूर्वगतं बलीय। तथा चाह-(पुव्वगयमित्यादि) यदि पूर्वगतं सूत्रं खलु अधस्तनादर्थाद्भवति बलीयः किमङ्ग! सूत्रात् सुतरामधस्तनात् सूत्राद्बलीय इत्यर्थः। तद्यथा-एक एकस्य पार्श्वे आवश्यकस्य सूत्रमर्थं तदुभयं वाऽधीते। तस्य समीपे पुनरावश्यकसूत्रार्थतदुभयवाचनाचार्ये पूर्वगतं सूत्रमधीते। आवश्यकसूत्रादिप्रतीच्छकस्य आभवति। एवं तावद्वाच्यं यावदष्टाशीतिः सूत्राणि पूर्वगतसूत्राच्च पूर्वगताऽर्थो बलीयान्। ततः एकस्य पार्श्वे पूर्वगतसूत्रमधीते तस्य समीपे पूर्वगतसूत्रवाचनाचार्ये पूर्वगतमर्थं पूर्वगतसूत्रमर्थं पूर्वगतसूत्रप्रतीच्छकस्य आभवति।

अथ किं कारणं शेषात्सूत्रादर्थाच्च पूर्वगतं सूत्रं बलीय? तत आह-

परिकम्मेहि य अत्था, सुत्तेहि य जेहि सूइया तेसिं।
होइ विभासा उवरिं, पुव्वगयं तेण बलियं तु ॥

दृष्टिवादः पञ्चप्रस्थानः। तद्यथा-परिकर्माणि सूत्राणि पूर्वगतमनुयोगश्चूलिकाश्च। तत्र ये परिकर्मभिः सिद्धश्रेणिकाप्रभृतिभिः सूत्रैश्चाष्टाशीतिसङ्ख्यैर्रर्थाः सूचितास्तेषां सर्वेषामन्येषां च उपरि पूर्वेषु विभाषा भवति। अनेकप्रकारात् तत्र भाष्यन्ते इत्यर्थः। तेन कारणेन पूर्वगतं सूत्रं बलिकम्।

सम्प्रति येन कारणेन सूत्रार्थो बलियान् तदभिधित्सुराह-

तित्थगरत्था (द्दा) ण खलु, अत्थो सुत्तं तु गणहरत्था(द्दा)णं।

समासतः क्षेत्रकल्पप्रतिपादनायाह–

एतो समासतो हं, वोच्छामि खेत्तकप्पं तु ।
जं देवलोगसरिसं, खेत्तं निप्पच्चवातियं जं च ॥ १ ॥
एसो तु खेत्तकप्पो, देसा खलु अद्धछव्वीसं । पं० भा०
जत्थ य गुणा इमे तू, खेमाईया मुणेयव्वा ।
खेमो सिवो सुभिक्खो, अप्पप्पाणो उवस्सयमणुन्नो ॥९॥
एसो तु खेत्तकप्पो, गामनगरपट्टणाइन्नो ।

(खेमो सिवादि) खेमो–डमरविरहिओ। सिवो–रोगविरहिओ। सुभिक्खो–पउरन्नपाणो । अप्पपाणो पि–पीलियाविरहिओ। उवस्सयमणुन्नो–इत्थिनपुंसकाइविरहिओ। समासेज्ज कयपवरक्षेत्रजिओ, गामणगराकराणि बहूणि वासामासपाउग्गाणि क्षेत्राणि ॥ ९ ॥

व्यासतो गाथाभिरेव तद्विवरणमाह–

खेमो डमरविरहितो, रोगाइविरहितो य सिवो होति ।१०।
पउरन्न-पाणदोसा, होति सुभिक्खो मुणेयव्वो ।
जलूगासखण मुइंग–पिलुगमसगादिविरहितो जो तु ॥११॥
सो होति अप्पपाणो, अप्पअभावम्मि थोवे य ।
समभूमिरेणुवज्जिय, परितुक्खमोवस्सया मणुन्नाओ ॥१२॥
गामणगरा वि य बहू, पाउग्गा मासकप्पस्स ।
सज्जणजणो य भद्दो, जहियं च मणुन्नसाहुजोणीओ ।१३।
तारिसए खेत्तम्मी, समणुन्नाओ विहारो तु ।
खेमो य सिवो य तहा, खेमसुभिक्खो य एव संजोगा ।१४।
णेयव्वा उसु पदेसुं, सत्तसु वा आणुपुव्वीए ।
अहवोदयऽग्गिसावग–तक्करवालऽसयवज्जिओ रंमो ॥१५॥

. .. . . ।

. . ... . . . . ...॥१६॥

णिरवक्खा वि य जहियं, समणगुणविदूय जत्थ जणो ।

(उदय त्ति) उदएण य पेलिज्जति न वुज्झतीर्थे. । अग्गिणा न डज्झति, घणकवाडहम्मियगाओ कोट्टिमतलाओ य । अहाकडाओ वसहीओ सरीरोवहितेण सावगतक्करपरचक्कविरहिएसु देसेसु साहुविहारो अणुण्णाओ । तत्थ य साहूण कालपरिभोगी जणो सुत्तत्थपोरिसीं काउं तड्याए पोरिसीए भिक्खवेलाए ॥१५॥ (गाहा) पुढवीपद य सूरो विसेसो जाणइ साहूण जहा एए अहिरन्नसोवन्नियमगलभूया सव्वसगवज्जिया समणगुणा य जणो जाणइ आहाराइ ॥ १६ ॥

एताणि चेवमाई–याणि आरीय खेत्तसहिआणि ॥१७॥
पुव्वभणियाणि जाणि उ, ताइ खलु सत्त य हवंति ।
णाणस्स दसणस्स य, जत्थ य नत्थी य उववातो ॥१८॥
एसो तु खेत्तकप्पो, जहियं च अणायणा नत्थि ।
उदगन्नयतुणादी, जह कुकणसिंधुतामलितादी ॥१९॥

(णाणस्स) णाणदंसणचरित्ताईणि जत्थ विही तव्वियमसमजोगाण य परिवुड्ढी अणायतणाणि य जत्थ लोइया । इत्थिपुरुसनपुंसका वा, वाउरिया वा बाहलोच्छियचरगसक्काइया विघकरभूया नत्थि लोउत्तर च अणायणाण पासत्थोसन्नकुसीलाइलिंगमत्तपडिच्छन्ना नत्थि एरिसे खेत्ते विहरियव्वं का इ पुण आलयणाइं काऊण ण विहरइ तत्थ ॥ १८ ॥ १९ ॥

णत्थि जहं अग्गिभयं, निरग्गितादपि य गिहा वा ।
जहियं च सावयभयं, सीहादीण ण विज्जए देसे ॥२०॥
जहिय च णत्थि चोरा–देम्वहो पथि मोसादी ।
वालाउ सप्पगोणस्स, मादीदातोहिगभय च णत्थि जहिं २१
मणसो समाहिकारो, सो रंमो होति णायव्वो ।
सूरो अणन्नगम्मो, जत्थ णरिंदो तहिं सुहविहारं ॥२२॥
साहुगुणे य वियाण–ति कुणति य सादरा जो रक्ख ।
अहिरन्नसुवन्ने ते, छज्जिवनिकायसंजमे णिरता ॥२३॥
जाणति जणो य एवं, जत्थ तु साहूण गुणनिमह ।
सज्झाओ जहि सुज्झति, कुदिट्ठिणो णयरिओ होनि २४
एसण इत्थी सोही, य जत्थ तहियं निवासो तु ।
जहियं च अणायतना, ण संति के पुण अणायतणा ॥२५॥
भणिय साहम्मि भिन्न–चित्ता मूलुत्तरदेसएर्पाडसेवी ।
एतेहिं जो देसो, आइन्नो तहय अन्नतित्थीहिं ॥२६॥
सत्थधवाहगामा, पुलिंददेसा अणायतणा ।
एतारिसम्मि खेत्ते, अप्पभिवच्छेण विहरियव्वं तु ॥२७॥
आलंवणा विकित्तुं, तु इमातिकातु ण विहरंति ।
वसही संथारो न–त्तपाणवत्थे पडिग्गहे सेहा ॥२८॥
सड्ढा य पुव्वसंथुय, असदहं ते य पडिवंधो ।

(वसहि) संथारवसहि सीयकाले निवाया, उण्हकाले सीयला, वासासु सीयविवज्जिया, अणोवरिमा संथारगा च । मरुकसमाइ पाणय च सीयल वत्थाइनामसिक्कं सिंधवाइ लब्भंति पडिग्गहा इत्थ पारपरया लब्भंति । सेहा उ उप्पज्जंति सड्ढा य दुद्धदहियाइ देंति । पुव्वपच्छासंथुएसु नेहाणुरायपडिवंधण वा असद्दहतस्स वा मासकप्प पडिवंधो होइ। किं मासकप्पेण बहुनरीरियासु विराहणा नाराईण च परिहाणी, को इ तित्थवोच्छेयो य वो इ ज च भणध णितियवासे सवासाइदोसा अतोमास सवसमाणस्स तो वधसवासाइ दोसा होंदिंति । एव निइयावसे दोसे असदहतस्स आइ ॥२८॥

फासुया एसरिज्जाय, णिवातापरितुक्खमा ॥२९॥
एरिसा साहुयानुग, वसही दुल्लभं न हि ।
एमेव य संथारा, सुलभा जोग्गा य साहूणं ॥३०॥
भत्तं सुलभमणुन्न च, परिसणत्थि अन्नहिं ।
वत्था पडिग्गहा वि य, सुलभा सहाये एत्थ खेत्तम्मि ॥३१॥
अन्नत्थ दुल्लभा तु, तेण तु एत्थ बहुगुणं तु ।
सड्ढा आहारादी, देंति जोग्गणिसंयुता चेव ॥३२॥
पुर पच्छ दट्ठभद्दा, य अन्नहिं णत्थि एरिसगा ।
उडुबद्धे मासकप्पे–ण विहारो त ण सदह इमेहिं ॥३३॥
संजम आतविराहण, वचते गामणुग्गामं ।
णाणादीण य हाणी, जोग्गं खेत्त तु मग्गमाणेणं ॥३४॥

एतेमि सन्निकासे, सालंवो मुणी व से खेत्ते ॥
छव्विहकप्पे आदी, तहि जारिसगाणि सेविया खेत्ता ।२।
अक्खेमअसिवामादी-णि कप्पती तारिसे वासे ॥
खेमादि अलभंतो, पडिकुट्ठेहिं पि वसति जयणाए ।३।
दुयगादी सजोगा, वक्खाण सन्निकासस्स ॥
अक्खेमे असिवम्मि य, असिवं वज्जे वसेज्ज अक्खेमे ।४।
तहियं उवहिविणासो, असिवे पुण जीवणासो तु ॥
एव ओमादीसु, संजोगा तिगचउग्गमादीया ।५।
वसियव्व जेसु जहा, तमहं वोच्छं समासेण ॥
कम्हि जोगिसण्णिकासे, बहुतरगं जत्थ अवगाहं ।६।
जाणे थोवतरियं, च हाणिं तच्छ णयरे दुविहकाले ॥
एतेसामन्नतरे, आलंवणविरहिओ वसे खेत्ते ।७।
कालदुया अवराहे, संवछिय मो वराहाण ॥
संवछितावराहे, तवोवछेदो तहेव मूलं वा ।८।
आयारपकप्पे ज-पमाणणेमाण चरिमम्मि ॥
एसो तु खेत्तकप्पो ।९।

( आई वक्कानियत्तो ) आई खेत्तकप्पो छविहकप्पे वन्निओ । खेत्तकप्पविही-खेमो सिवाइ जइ पुण एगा अक्खेमो, एगो असिवो होज्जा । अक्खेमो नाम जत्थ उवहिविणासो, उच्यते-यखामे उवहि विणासो अत्थिज्जइ । असिवे उ सव्वनासो चेव, अह अक्खेमो य दुभिक्ख च दुब्भिक्खे य णगरपरिहाणी । जयणाए गुरुलाघवं वा नाऊण एव एक्कासजोएण जावइया सजोगा उट्ठति तावइएसु अप्पाबहुय नाऊण जत्थ अप्पदोस तत्थ वाइयव्व सालवो नाणदरिसणाइ (आलवण गाहा) कडजोगी वि ह कडजोगी वि सन्निगास, सन्निगासो नाम अब्भासो वा अववादो वा नाऊण अप्पदोसतरे अच्छेज्जा जत्थ गुणा बहुतरा नाणाइअप्पतरिया य हाणी दुविहा तत्थ काले वि उडुवद्धे वासासु य वसमाणो सुद्धो एए सामन्नतरे खेत्ते आलवणविरहिओ पडिकुट्ठे खेत्ते वसइ तस्ससवदित्तावराहे तवोच्छेदो वा । एस खत्तकप्पो ॥ प० चू० । गणिविद्याप्रकीर्णकेन च क्षेत्राणि कथितानि तानि कानीति प्रश्ने-सप्त क्षेत्राणि चैत्यादीनि प्रसिद्धानि । प्रतीष्ठातीर्थयात्रालक्षणक्षेत्रद्वयप्रक्षेपेण च नव क्षेत्राणि भवन्ति इति । ११७ प्र० सेन० ४ उल्ल० ।

खेत्तक्खा-क्षेत्राख्या-स्त्री० । एकत्र पट्टादौ चतुर्विंशतिप्रतिमासु, ध० २ अधि० ।

खेत्तगय-क्षेत्रगत-त्रि० । कर्षणभूमिसंश्रिते, प्रश्न० ३ संव० द्वार।

खेत्तट्ठाणाउय-क्षेत्रस्थानाऽऽयुष्-न० । क्षेत्रस्याऽऽकाशस्य स्थान भेद पुद्गलाऽवगाहकृत. तस्याऽऽयु. स्थिति । अथवा क्षेत्रे एकप्रदेशाऽऽदौ स्थान यत्पुद्गलानामवस्थान तद्रूपमायु क्षेत्रस्थानाऽऽयु पुद्गलानामाकाशावगाहस्थितौ, भ० ५ श० ७ उ० ।

खेत्तनाण-क्षत्रज्ञान-न० । किमिद मायाबहुलम् ? अन्यथा वा तथा साधुभिरभावित भावित वा नगराऽऽदीति विमर्शणरूपे प्रयोगमतिसम्पद्भेदे, उत्त० १ अ० । स्था० ।

खेत्तपइट्ठा-क्षेत्रप्रतिष्ठा-स्त्री० । क्षेत्रेषु जिनानां प्रतिष्ठायाम्, पं० ७ विवि० । जीवा० । ( 'पइट्ठा' शब्दे विलोकनीया )

खेत्तपमाण-क्षेत्रप्रमाण-न० । क्षेत्रविषयप्रमाणभेदे, अनु० ।

अथ क्षेत्रप्रमाणमभिधित्सुराह-

से किं तं खेत्तपमाणे ? खेत्तपमाणे दुविहे पण्णत्ते । तं जहा-पएसणिप्फण्णे अ विभागनिप्फण्णे अ । से किं त पएसनिप्फन्ने ?-पएसनिप्फन्ने एगपएसोगाढे, दुपएसोगाढे, तिपएसोगाढे, संखिज्जपएसोगाढे, असंखिज्जपएसोगाढे । सेत्तं पएसणिप्फन्ने । से किं त विभागनिप्फण्णे ?-विभागनिप्फन्ने-"अंगुलविहत्थीरयणी, कुत्थी धणुगाउअं च वोधव्वं । जोयणसेढीपयरं, लोगमलोगे वि अ तहेव " ॥ १ ॥

( से किं न खेत्तप्पमाणे ? इत्यादि ) इदमपि द्विविध, प्रदेशा इह क्षेत्रस्य निर्विभागास्तैर्निष्पन्न प्रदेशनिष्पन्नम्, विभाग पूर्वोक्तस्वरूपस्तेन निष्पन्न विभागनिष्पन्नम् ( से किं त पएसनिप्फन्ने ) तत्रैकप्रदेशावगाढाद्यसंख्येयप्रदेशाऽवगाढपर्यन्त प्रदेशनिष्पन्नम् । एकप्रदेशाऽऽद्यवगाढतया एकाऽऽदिभि क्षेत्रप्रदेशैर्निष्पन्नत्वादत्राऽपि प्रदेशनिष्पन्नता भावनीया । प्रमाणता त्वेकप्रदेशाऽवगाहित्वादिना स्वस्वरूपेणैव प्रमीयमानत्वादिति विभागनिष्पन्न त्वङ्गुलाऽऽदि । तदेवाऽऽह-( अंगुलविहत्थिगाहा ) अंगुलादिस्वरूप च स्वत एव शास्त्रकारो वक्ष्यति । अनु० ।

खेत्तपलिओवम-क्षेत्रपल्योपम-न० । क्षेत्रमाकाशं तदुद्धारप्रधान पल्योपम क्षेत्रपल्योपमम् । आकाशोद्धारकालविशेषे, अनु० । कर्म० । ( 'पलिओवम' शब्दे स्वरूपतो ज्ञेयम् )

खेत्तपाल-क्षेत्रपाल-त्रि० । क्षेत्र पालयति । पाल अण् । क्षेत्ररक्षके व्यन्तरविशेषे, भैरवे, पु० । वाच० । मथुरायां क्षेत्रपालसारमेयवाहनः तीर्थस्य रक्षा करोति । ती० ६ कल्प । दिपुर्य क्षेत्रपालभुजपट्टभास्वरसहस्य विघ्नौघमपोहति, । ती० ४४ कल्प ।

खेत्तपोग्गलपरियट्ट-क्षेत्रपुद्गलपरावर्त्त-पु० । क्षेत्रविषये पुद्गलपरावर्त्ते, कल्प० ७ क्षण । ( अस्य स्वरूप 'पुद्गलपरावट्ट' शब्दे ज्ञेयम् )

खेत्तय-क्षेत्रज-पु० । क्षेत्र भार्या तस्या जात क्षेत्रज । स्वधर्मेण नियुक्ताया पत्न्या पुरुषाऽन्तरेण जनिते पुत्रभेदे, यथा पाण्डोः पाण्डवा', लोकरूढ्या तद्भार्याकुन्त्या एव तेषां पुत्रत्वात् न तु पाण्डोरादित्यादिभिर्जनितत्वादिति । स्था० १० ठा० ।

खेत्तराग-क्षेत्ररोग-पु० । रोगाऽन्तराऽऽधारभूते कुष्ठाऽऽदिरोगे, ठा० १० ठा० ।

खेत्तलोय-क्षेत्रलोक-पु० । क्षेत्रमेव लोक क्षेत्रलोक लोकभेदे, आ० म० द्वि० । ( लोकशब्दे व्याख्यास्यते )

खेत्तवत्थुपमाणाइक्कम्म-क्षेत्रव ( वा ) स्तुप्रमाणाऽतिक्रम-पुं० । क्षेत्रमेव वस्तु क्षेत्रवस्तु ग्रन्थान्तरे तु क्षेत्र च वास्तुगृहमिति व्याख्यायते । उत्त० १ अ० । तयो क्षेत्रवास्तुनो' प्रमाणस्य योजनेन क्षेत्रान्तरादिमीलनेनाऽतिक्रमोऽतिचार । ध० २० । क्षेत्रवस्तुनः प्रत्याख्यानकाले गृहीतप्रमाणोल्लङ्घने, एकक्षेत्रादिपरिमाणकर्तृमदन्यक्षेत्रस्य वृत्तिप्रवृत्तिसीमाऽपनयनेन पूर्वक्षेत्रे योजनात्प्रमाणातिक्रमे च । एष च इच्छापरिमाणस्य द्वितीयोऽतिचार । उ० १ अ० । आव० ।

खेद संसारान्तर्वर्तिनां प्राणिनां कर्मविपाकजं दुःखं जानातीति खेदज्ञो दुःखापनोदनसमर्थोपदेशदानात् सूत्र० १ श्रु० ६ अ० । गीतार्थे, ओघ० । " खेयण्णो " खेदः सम्यक् प्रायश्चित्तविधिः परिश्रमोऽभ्यास इत्यर्थस्तं जानातीति खेदज्ञः । तथाविधे आलोचनार्हे गुरौ, ध० २ अधि० ।

क्षेत्रज्ञ–त्रि० । संसक्तविरुद्धद्रव्यपरिहार्यकुलादिक्षेत्रस्वरूपपरिच्छेदके, आचा० १ श्रु० २ अ० ५ उ० । " खेयन्ने से कुसले महेसी " यदि वा क्षेत्रज्ञो यथाऽवस्थितात्मस्वरूपपरिज्ञानादात्मज्ञ इति । अथवा क्षेत्रमाकाशं तज्जानातीति क्षेत्रज्ञो लोकालोकस्वरूपपरिज्ञातेत्यर्थः । सूत्र० १ श्रु० ६ अ० ।

खेयाणुगय–खेदानुगत–त्रि० । खेदः संयमस्तेनानुगतः खेदानुगतः । सप्तदशविधसंयमरते, उत्त० १५ अ० ।

खेरि–खेरि–स्त्री० । परिशाटी, " धण्णखेरिं वा " धान्यस्य खेरिं परिशाटिं दृष्ट्वा पृच्छति । बृ० २ उ० ।

खेल–खेल–न० । कण्ठमुखश्लेष्मणि, भ० २ श० १ उ० । त० । आ० म० । प्रव० । स्था० । आव० । विशे० । कफसंघाते, ज० २ वक्ष० । निष्ठीवने, ज्ञा० १ श्रु० ८ अ० । स्था० । उत्त० । प्र० । प्रश्न० । त० । नि० चू० ।

खेलग–खेलक–पुं० । राजस्तोत्रपाठके, ज्ञा० १ श्रु० १ अ० ।

खेलण–खेलन–न० । खेल ल्युट् । क्रीडायाम्, आधारे ल्युट् । शारिफलके, करणे ल्युट् वाच० । क्रीडासाधने, आ० क० ।

खेलपडिय–खेलपतित–त्रि० । श्लेष्मपतिते, " खेलपडियमप्पाण न तरइ मच्छिआ जहा विमोहे " ग० २ अधि० ।

खेलमल्लग–खेलमल्लक–न० । श्लेष्मपरिष्ठापनभाजने, आ० म० प्र० । खेलमल्लकाद् दीक्षां गृहीत्वा स्वयमेव लोचं कृतः । विशे० ।

खेलसंचाल–खेलसंचाल–पुं० । श्लेष्मसंचारे, ध० २ अधि० । ह० ।

खेलासव–खेलाऽऽश्रव–त्रि० । खेलं निष्ठीवनं तदाश्रवति क्षरतीति खेलाश्रवम् । श्लेष्मकरके, ज्ञा० १ श्रु० ८ अ० ।

खेलोसहि–खेलौषधि–पुं० । खेलः श्लेष्मा औषधिर्यस्य स तथा । आ० म० प्र० । ग० । तृतीयलब्धियुक्ते, पा० । यत्प्रभावतः श्लेष्मा सर्वरोगापहारकः सुरभिश्च भवति । प्रव० २७० द्वार० । आ० चू० ।

खेल्ल–खेल्ल–न० । ' खेल ' शब्दार्थे, ।

खेल्लावणधाइ–खेलापनधात्री–स्त्री० । क्रीडनधात्र्याम्, आचा० ।

खेल्लूड–खेल्लूड–पुं० । अनन्तकायेऽसङ्खे लोकरूढिगम्ये, भ० ७ श० ३ उ० ।

खेव–क्षेप–पुं० । क्षिप घञ् । निन्दायाम्, प्रेरणे, क्षेपणे, हेलायाम्, लङ्घने, करणे घञ् । गर्वे, विलम्बे, कर्मणि घञ् गुच्छे, वाच० । "क्षेपोऽन्तरान्तरान्यत्र, चित्तन्यासोऽफलावहः" ( १७ ) अन्तरान्तरा योगकरणकालस्यैवान्यत्राधिकृतान्यकर्मणि चित्तन्यासः क्षेपः । द्वा० १८ द्वा० । इत्युक्तलक्षणाया क्षिप्तचित्ततायाम्, षो० १४ विव० ।

खेवण–क्षेपण–न० । प्रेरणे, ज्ञा० १ श्रु० २ अ० ( नौकाया क्षेपणं नौकाशब्दे ) अपवादे, लङ्घने, मारणे, विक्षेपे, यापने च । वाच० ।

खोखुब्भमाण–चोक्षुभ्यमाण–त्रि० । भृशं क्षुभ्यमाणे, औ० । अभिक्षुभ्यति, भयभ्रान्ते, प्रश्न० ३ द्वार । प्रश्न० । व्याकुलीक्रियमाणे, प्रश्न० ३ आश्र० द्वार ।

खोड–क्षोट–पुं० । हस्तोपरिप्रस्फोटने, उत्त० १२ अ० ।

क्षोभ–घञ् । आलाने, गजबन्धन्याम्, वा । खोडराजकुलदातव्यहिरण्यादिद्रव्ये, व्य० १ उ० । नि० चू० ।

खोभ–त्रि० । क्षोभ गतिप्रतिघाते । अच् । खञ्जे, वाच० । काष्ठमयप्राकारे, बृ० १ उ० ।

खोडग–क्षोटक–पुं० । "क्ष्वेटकादौ" । ८ । २ । ६ इत्यनेन क्षस्य खः स्थाने ख. । अङ्गुलीनखाग्रेण चर्मस्पर्शनिष्पीडने, प्रा० २ पाद ।

स्फोटक–पुं० । पूर्वसूत्रेण स्फा अत्र स्फो । व्रणे, वाच० ।

खोडभंग–खोटभङ्ग–पुं० । खोटं नाम यत् राजकुले हिरण्यादि द्रव्यं दातव्यम् । तस्य भङ्गः । खोटभञ्जने ' खोडभंगो त्ति वा अखोडभंगो त्ति वा उक्कोडभंगो त्ति वा एगट्ठं " व्य० १ उ० । नि० चू० ।

खोडिय –खोटिक–पुं० । रैवतगिरेः क्षेत्रपाले, ती० ३ कल्प० ।

खोद–क्षोद–पुं० । इक्षुरसे, रा० । मधुनि, भ० ७ श० ६ उ० । चूर्णने, पेषणे, ( नाय क्षोदक्षमः ) आ० म० द्वि० । कर्मणि घञ् रजसि, वाच० ।

खोदरस–क्षोदरस–पुं० । क्षोदोदसमुद्रे, द्वी० ।

खोदवर–खोदवर–पुं० । जम्बूद्वीपाऽपेक्षया सप्तमे द्वीपे, स्था० ३ ठा० ४ उ० । चं० प्र० । सू० प्र० ।

घतोदं णं समुद्दं खोदवरे णामं दीवे वट्टवलयागारे० जाव चिट्ठति । तहेव जाव० अट्ठो खोदवरेणं दीवे तत्थ तत्थ देसे देसे तहिं खुड्डवावीओ० जाव खोदोदगपडिहत्थाओ उप्पातपव्वतगा सव्ववेरुलिया मया० जाव परिवसति । से तेणट्ठेणं सव्वं जोइसं तहेव० जाव तारा ॥

( से केणट्ठेणमित्यादि ) अथ केनार्थेन भदन्त ! एवमुच्यते । क्षोदवरो द्वीपः । भगवानाह–गौतम ! क्षोदवरे द्वीपे तत्र तत्र देशे तस्य २ देशस्य तत्र २ प्रदेशे बहवः ( खुड्डवावीओ ) इत्यादि पूर्ववत् तावद्वक्तव्य–"यावत् वाणमंतरा देवा देवीउ आसयंति सयन्ति० जाव विहरति" नवरं वाप्यादयः क्षोदोदकवरपरिपूर्णा इति वक्तव्यम् । तथा पर्वतकाः पर्वतेष्वासनानि गृहकाणि गृहकेष्वासनानि मण्डपका मण्डपकेषु पृथिवीशिलापट्टकाः सर्वात्मना वैडूर्यमयाः प्रज्ञप्ताः । सुप्रभमहाप्रभौ च यथाक्रमं पूर्वार्द्धापरार्द्धाधिपती द्वौ देवावत्र क्षोदवरे द्वीपे महर्द्धिकौ यावत्पल्योपमस्थितिकौ परिवसतः । तत्र क्षोदोदकवाप्यादियोगात् क्षोदवरः स द्वीपः । अत एवाह–( से एएणट्ठेणमित्यादि ) चन्द्रादिसूत्रं प्राग्वत् (खोदवरेणं दीवमित्यादि) क्षोदवरं णमिति पूर्ववत् । द्वीपं क्षोदोदो नाम समुद्रो वृत्तो वलयाकारसंस्थानसंस्थितः सर्वतः समन्तात् संपरिक्षिप्य तिष्ठति । चक्रवालविष्कम्भादिवक्तव्यता पूर्ववत् यावज्जीवोपपातसूत्रम् । जी० ३ प्रति० ।

खोदोदय–क्षोदोदक–पुं० । क्षोदं इक्षुरस इवोदकं यस्य स तथा सूत्र० १ श्रु० ६ अ० । लवणसमुद्रापेक्षया सप्तमे समुद्रे, स्था० ७ ठा० ।

# गकार

गअ–गज–पुं० । " क-ग-च-ज-त-द-प-य-वां प्रायो लुक् " ८।१।१७७ । इति जलुक्, हस्तिनि, प्रा० १ पाद ।

गत–पुं० । क ग-च-ज० ८।१ । १७७ । इत्यादिना तलुक् प्रा० १ पाद । याते, अइ आसगओ राया " उत्त० १८ अ० ।

गआ–गदा–स्त्री० । "क-ग च-ज-त-द० " ८।१। १७७ । इत्यादिना दलुक् ' गआ ' दण्डकीलितलौहादिमयगोलकलक्षणेऽस्त्रभेदे, प्रा० १ पाद ।

गइ–गति–स्त्री० । गम भावादौ यथायथ क्तिन् । गमने, औ० । सूत्र० । स्था० । दर्श० । चलने, मरण० । गति प्रवृत्ति क्रम इति यावत् विशे० । पादविहरणादिक्रियायाम्, दर्श० ।

देवगति –

उक्किट्ठाए तुरियाए चवलाए चंडाए जयणाए उद्धूआए सिग्घाए दिव्वाए देवगईए ॥

(उक्किट्ठाए त्ति) उत्कृष्टया अन्येषां गतिभ्यो मनोहरया ( तुरियाए त्ति ) त्वरितया, चित्तौत्सुक्यवत्या ( चवलाए त्ति ) कायचापल्यवत्या ( चंडाए त्ति ) चण्डया तीव्रया ( जयणाए त्ति ) शेषगतिजयनशीलया ( उद्धूआए त्ति ) उद्धूतया प्रचण्डपवनोद्धूतधूमादेरिव ( सिग्घाए त्ति ) शीघ्रया 'छेयाए' त्ति क्वचित्पाठः तत्र छेकया विघ्नपरिहारदक्षया(दिव्वाए त्ति) देवयोग्यया ईदृश्या ( देवगईए त्ति) देवगत्या । कल्प० २ क्षण । भ० । सञ्चरणे, ज० ३ वक्ष० । ( ज्योतिष्काणां गति ' जोइसिय ' शब्दे वक्ष्यते ) अण्वादीनां गमनपरिणामे, विशे० । उत्पत्तिस्थानगमने, स्था० ६ ठा० । प्रज्ञापकस्थानापेक्षया मृतस्यान्यत्र गमने, ( सा चतसृषु दिक्ष्विति ' दिसा ' शब्दे वक्ष्यते)मरणानन्तर मनुजत्वादेः सकाशात् नारकत्वादौ जीवस्य गमने, " एगा गती " सा चैकस्यैकैव ऋज्वादिका नरकगत्यादिकपुद्गलस्य वा स्थितिविलक्षणमात्रतया चैकतयैकस्वरूपा सर्वजीवपुद्गलानामिति । स्था० १ ठा० १ उ० । " एगस्स जंतो गतिरागती य " एकस्याऽसहायस्य जन्तोः शुभाशुभसहायस्य गतिर्गमन परलोके भवति । तथा आगतिरागमन भवान्तरादुपजायते , कर्मसहायस्यैवेति । उक्त च–" एकः प्रकुरुते कर्म, भुनक्त्येकश्च तत्फलम । जायते म्रियते चैक, एको याति भवान्तरम् ॥ १ ॥ " इत्यादि । तदेव ससारे परमार्थतो न कश्चित्सहायो धर्ममेक विहायेतद्विगणय्य मुनीनामयं मौन सयमस्तेन तत्प्रधानं वा सूर्यादिति । सूत्र० १ श्रु० १३ अ० । गतिर्द्विधा, स्पृशद्गतिः, अस्पृशद्गतिश्च , तपरिणाद् व्याख्यास्यते ' आ० म० द्वि० । "गई दुविहा" ( १२३ गाथाङ्क) गतिर्वा द्विविधेति । तत्र गमन गच्छति वा अनयेति गति' । द्वे विधे यस्या सेय द्विविधा, द्वैविध्यं वक्ष्यमाणलक्षणमिति गाथार्थः । तथा चेदमेव द्वैविध्यमुपदर्शयन्नाह–द्विविधा गति , कन्दुकगतिरिलिकागतिश्च । पं० स० ( अनयो स्वरूप स्वस्वस्थाने उक्तम ) गम्यते तथाविधकर्मसचिवैर्जीवैः प्राप्यते इति गतिः । कर्म० ६ कर्म० । प्रज्ञा० । गम्यते प्राप्यते स्वकर्मरजसा समाकृष्टैर्जन्तुभिरिति गतिः । प्रव० १५ द्वार । गतिः नामकर्मोदयान्नारकत्वतिर्यक्त्वमनुजत्वलक्षणपर्यायपरिणतौ, कर्म० ४ कर्म० । पं० स० । सा चतुर्धा नारकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्च । तद्विपाकवेद्यायां कर्मप्रकृतौ च । साऽपि चतुर्धा । पं० स० ३ द्वार । अत्राह–ननु सर्वेऽपि पर्याया जीवेन गम्यन्ते प्राप्यन्ते इति सर्वेषामपि तेषां गतित्वप्रसङ्गस्तथा च प्राग्गतिशब्दस्यैवमेव व्युत्पत्तिर्दर्शितेति ? नैवम् । यतो विशेषेण व्युत्पादिता अपि शब्दा रूढितो गोशब्दवत्प्रतिनियतमेवार्थं विषयीकुर्वन्तीत्यदोषः । कर्म० १ कर्म० । आचा० । स० । विशे० । उत्त० । दर्श० । भ० । प्रव० ।

पञ्चधा–

पंच गईओ पण्णत्ताओ । तं जहा–निरयगई, तिरियगई, मणुयगई, देवगई, सिद्धिगई ॥

गमन गतिर्गम्यत इति वा गतिः क्षेत्रविशेषो गम्यते वा अनया कर्मपुद्गलसहत्येति गतिर्नामकर्मोत्तरप्रकृतिरूपा तत्कृता वा जीवावस्थितिः । तत्र निरये नरके १ गतिर्निरयश्चासौ गतिश्चेति वा २ निरयप्रापिका वा गतिः ३ निरयगतिः । एव तिर्यक्षु १ तिरश्चां २ तिर्यक्त्वप्रसाधिका वा गतिः ३ तिर्यग्गतिः । एव मनुष्यदेवगती सिद्धौ गतिः सिद्धिश्चासौ गतिश्चेति वा सिद्धिगतिरिह नामप्रकृतिर्नास्तीति । स्था० ५ ठा० ३ उ० । प्रव० ।

अष्टधा वा–

अट्ठ गईओ पण्णत्ताओ । तं जहा–निरयगई,तिरियगई,० जाव सिद्धिगई, गुरुगई पणोल्लणगई, पब्भारगई ॥ स्था० ॥

( अट्ठगईओ इत्यादि ) सुगमम । नवरम् गुरुगइ त्ति भावप्रधानत्वात् निर्देशस्य गौरवेण ऊर्ध्वाधस्तिर्यग्गमनस्वभावेन या परमाण्वादीनां स्वभावतो गतिः सा गुरुगतिरिति । या तु परप्रेरणात्सा प्रणोदनगतिर्वाणादीनामिव । या तु द्रव्यान्तराक्रान्तस्य सा प्राग्भारगतिर्यथा नावादेरधोगतिरिति । स्था० ८ ठा० ।

यद्वा दशधा–

दसविहा गई पण्णत्ता । त जहा–निरयगई,निरयविग्गहगई, तिरियगई, तिरियविग्गहगई, एवं० जाव सिद्धगई, सिद्धविग्गहगई, ॥

(विशेष. निरयगत्यादिशब्देषु) ( एकेन्द्रियादयो जीवा मृत्वा क गच्छन्ति इत्यत्र ' उववाय ' शब्दे द्वि० भा० ९१६ पृष्ठे गतीनामुपपातविरहश्च तत्रैव ९१५ पृष्ठे च ) सर्वं सूत्रकदम्बकमवतारणीयम । प्रज्ञा० । नवरमिह–प्रव० १६१ द्वार । ( गतिषु जीवस्थानगणस्थानचिन्तामार्गणा ' ठाण ' शब्दे करिष्यते ) नारकादीनां शीघ्रा गति –

णेरइयाणं भंते ! कह सीहा गई कहं सीहागइविसए पण्णत्ते ? गोयमा ! से जहाणामए केइ पुरिसे तरुणे वलवं

